# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

New Series, No. 768.





# न्यायकुसुमाञ्जलिप्रकरणम्

द्वितीयभागरूपम् ।

न्यायाचार्य्यपदाङ्कितश्रीमदुदयनाचार्य्यविरचितम्

महामहोपाध्यायरुचिदत्तकृत-मकरन्दोद्भासित-वर्द्धमानोपाध्यायप्रणीतप्रकाशसहितम्]

# NYA'YA-KUSUMA'NJALI-PRAKARAṆAM

EDITED BY

MAHA'MAHOPA'DHYA'YA CHANDRAKA'NTA TARKA'LANKA'RA.

VOLUME II.

FASCICULUS I.




CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1890.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## Asiatic Society of Bengal,

**No. 57, PARK STREET, CALCUTTA.**

AND OBTAINABLE FROM

THE SOCIETY'S LONDON AGENTS, MESSRS. TRUBNER & CO.

57 AND 59, LUDGATE HILL, LONDON, E. C.

### BIBLIOTHECA INDICA.

*Sanskrit Series.*

| | | Rs | |
|---|---|---|---|
| Advaita Brahma Siddhi, Fasc. I—IV @ /6/ each | Rs | 1 | 8 |
| Agni Purána, (Sans.) Fasc. II—XIV @ /6/ each | | 4 | 14 |
| Aṇu Bháshyam, Fasc. I | | 0 | 6 |
| Aitareya Áraṇyaka of the Rig Veda, (Sans.) Fasc. I—V @ /6/ each | | 1 | 14 |
| Aphorisms of Sáṇḍilya, (English) Fasc. I | | 0 | 6 |
| Aphorisms of the Vedánta, (Sans.) Fasc. VII—XIII @ /6/ each | | 2 | 4 |
| Ashṭasáhasriká Prajnápáramitá, Fasc. I—VI @ /6/ each | | 2 | 4 |
| Aśvavaidyaka, Fasc. I—V @ /6/ each | | 1 | 14 |
| Avadána Kalpalatá by Kshemendra (Sans. & Tibetan) Vol. I Fasc. 1—2 @ 1/ | | 2 | 0 |
| Bhámatí, (Sans.) Fasc. I—VIII @ /6/ each | | 3 | 0 |
| Brahma Sútra, (English) Fasc. I | | 0 | 12 |
| Brihaddevatá, (Sans.) Fasc. I—II @ /6/ each | | 0 | 12 |
| Bṛihaddharma Puráṇam, Fasc. I—II @ /6/ each | | 0 | 12 |
| Bṛihat Áraṇyaka Upanishad, (Sans.) Fasc. VI, VII & IX @ /6/ each | | 1 | 2 |
| Ditto (English) Fasc. II—III @ /6/ each | | 0 | 12 |
| Bṛihat Saṃhitá, (Sans.) Fasc. II—III. V—VII @ /6/ each | | 1 | 14 |
| Chaitanya-Chandrodaya Nátaka, (Sans.) Fasc. II—III @ /6/ each | | 0 | 12 |
| Chaturvarga Chintámaṇi, (Sans.) Vols. I, Fasc. 1—11; II, 1—25; III. Part I Fasc. 1—18, Part II, Fasc. 1—6 @ /6/ each | | 22 | 8 |
| Chhándogya Upanishad, (English) Fasc. II | | 0 | 6 |
| Daśarupa, Fasc. II and III @ /6/ | | 0 | 12 |
| Gobhilíya Gṛihya Sútra, (Sans.) Fasc. I—XII @ /6/ each | | 4 | |
| Hindu Astronomy, (English) Fasc. I—III @ /6/ each | | 1 | 2 |
| Kála Mádhava, (Sans.) Fasc. I—IV @ /6/ | | 1 | 8 |
| Kátantra, (Sans.) Fasc. I—VI @ /12/ each | | 4 | 8 |
| Kathá Sarit Ságara, (English) Fasc. I—XIV @ /12/ each | | 10 | 8 |
| Kaushitakí Brahman Upanishads, Fasc. II | | 0 | 6 |
| Kúrma Purána, (Sans.) Fasc. I—IX @ /6/ each | | 3 | 6 |
| Lalita-Vistara (Sans.) Fasc. II—VI. @ /6/ | | 1 | 14 |
| Lalita-Vistara, (English) Fasc. I—III @ /12/ each | | 2 | 4 |
| Madana Párijáta, (Sans.) Fasc. I—VII @ /6/ each | | 2 | 10 |
| Manuṭíká Sangraha, (Sans.) Fasc. I—III @ /6/ each | | 1 | 2 |
| Márkaṇḍeya Purána, (Sans.) Fasc. IV—VII @ /6/ each | | 1 | 8 |
| Márkaṇḍeya Puráṇa (Eng.) Fasc I—II @ /12/ each | | 1 | 8 |
| Mímáṃsá Darśana, (Sans.) Fasc. II—XIX @ /6/ each | | 6 | 12 |
| Nárada Pancharátra, (Sans.) Fasc. IV | | 0 | 6 |
| Nárada Smṛiti, (Sans.) Fasc. I—III @ /6/ | | 1 | 2 |
| Nayavártikam, (Sans.) Fasc. I | | 0 | 6 |
| Nirukta, (Sans.) Vol. I. Fasc. IV—VI; Vol. II, Fasc. I—VI; Vol. III, Fasc. I—VI; Vol. IV, Fasc. I—VII @ /6/ each Fasc. | | 8 | 4 |
| Nítisára, or The Elements of Polity, By Kámandaki, (Sans.) Fasc. II—V @ /6/ each | | 1 | 8 |
| Nyayabindutika (Sans.) | | 0 | 10 |
| Nyáya Darśana, (Sans.) Fasc. III | | 0 | 6 |
| Nyáya Kusumánjali Prakaraṇam (Sans.) Vol. I, Fasc. 1—6 Vol. II, Fasc. 1 @ /6/ each | | 2 | 10 |
| Pariśishṭa Parvan (Sans.) Fasc. I—IV @ /6/ each | | 1 | 8 |

(*Continued on third page of Cover.*)

# कुसुमाञ्जलौ।

## चतुर्थः स्तवकः ॥

ननु सदपीश्वरज्ञानं न प्रमाणं, तल्लक्षणायोगात्। अनधिगतार्थगन्तुस्तथाभावात्। अन्यथा स्मृतेरपि प्रामाण्यप्रसङ्गात्। न च नित्यस्य सर्व्वविषयस्य चानधिगतार्थता, व्याघातात्। अत्रोच्यते।

अव्याप्तेरधिकव्याप्तेरलक्षणमपूर्व्वदृक्।

---

सत्त्वेऽपि तस्याप्रमाणत्वादिति चतुर्थीं विप्रतिपत्तिमुत्थापयति। नन्विति। गन्तुर्बोधकस्य। अनधिगतार्थगन्तृत्वञ्च [१]फलप्राक्कालिकसमानाधिकरणज्ञानाविषयविषयकत्वम्। वेदो न प्रमाणमप्रमाऽनुभवमूलकत्वादिति भावः। तदेतल्लक्षणं यथार्थत्वेन विशेषितं न वा? आद्ये प्रमाभूतधारावहनबुद्धावव्यापकम्, अन्त्ये च भ्रमेऽतिव्याप्तिरि-

---

(१) ननु पराधिगतेऽप्यर्थे परस्य प्रमोत्पत्तेरनधिगतार्थगन्तृत्वं तत्राव्याप्तमत आह फलेति। उत्तरकालीनस्वज्ञानमादायाव्याप्तेराह कालिकान्तम्। एतावता किमित्यत आह वेद इति। यद्यप्येवं भट्टस्य स्वतोऽसिद्धिः, तथाप्येवमप्रमाऽनुभवमूलको वेदः स्यात् तथा चाप्रमाणं स्यादिति तर्कविधयैतद्द्रष्टव्यम्।

1

**यथार्थानुभवो मानमनपेक्षतयेष्यते ॥१॥**

**न ह्यधिगते अर्थे अधिगतिरेव नोत्पद्यते, कारणा-**

---

त्याह । अव्याप्तेरिति । दृक् दर्शनं, भावपरतया । अनधिगतार्थ-विषयकत्वं न लक्षणमित्यर्थः । स्वमते [१]प्रमाणलक्षणमाह । यथार्थेति । अत्रोक्तदोषाभावादित्यर्थः । ननु यथार्थानुभववद्यथार्थ-स्मृतिरपि प्रमा किं न स्यात्, यथार्थत्वस्यैव तन्त्रत्वादनुभवत्वस्य व्यर्थत्वादित्यत आह । अनपेक्षतयेति । स्मृतेर्याथार्थ्येऽपि [२]स्वकारणी-भूतान्यूनानतिरिक्तविषयकानुभवयाथार्थ्यापेक्षा, न त्वनुभवस्येत्यर्थः ।

---

(१) प्रमाणेति प्रमालक्षणमित्यर्थः ।

(२) नन्वेवमनुभवोऽपि प्रमा न स्यात्, तस्यापि विशेषणज्ञानादिसापे-क्षत्वादित्यत आह स्वकारणीभूतेति । एतच्च धारावाहिके तादृश-पूर्व्वज्ञानयाथार्थ्यापेक्ष्ययाथार्थ्यतया उत्तरकालेऽतिव्याप्तिवारणाया-न्यूनानतिरिक्तविषयकत्वेन कारणत्वं विवक्षितम् । तस्य च विशेषण-मात्रविषयतया तथात्वमिति नोक्तदोषः । न च तत्सापेक्षत्वमेव याथार्थ्यं तस्येति वाच्यम् । तत्सापेक्षत्वं हि तन्नियतत्वम् । तच्च तत्रापि । स्मृतावपि तदेव तत् । लिङ्गज्ञानयाथार्थ्यापेक्षित्वमादायातिव्याप्ति-वारणायान्यूनेति । वस्तुतः पूर्व्वोक्तातिव्याप्तिवारणार्थमपि तत् । अनतिरिक्तपदं चिन्त्यम् । अतएव परिमले नास्तीति । किञ्च स्मृतावपि पूर्व्वानुभवस्यान्यूनविषयतयैव जनकत्वम् । अतिरिक्त-विषयानुभवादपि तदंशे संस्कारानुद्बोधे स्मृतिदर्शनात् । एवञ्च वक्तृवाक्यार्थज्ञानयाथार्थ्यापेक्षित्वमादाय शाब्दानुभवेऽतिव्याप्तिरित्यपि चिन्त्यम् ।

नामप्रतिबन्धात् । न चोत्पद्यमानाऽपि प्रमातुरनपेक्षितेति न प्रमा, प्रामाण्यस्यातदधीनत्वात् । नापि पूर्व्वाविशिष्टतामात्रेणाप्रामाण्यम् । उत्तराविशिष्टतया पूर्व्वस्याप्यप्रामाण्यप्रसङ्गात् । तदनपेक्षत्वेन तु तस्य प्रामाण्ये तदुत्तरस्यापि तथैव स्यादविशेषात् । छिन्ने कुठारादीनामिव परिच्छिन्ने नयनादीनां साधकतमत्वमेव नास्तीत्यपि नास्ति, फलोत्पादानुत्पादाभ्यां विशेषात् । तत्फलं प्रमैव न भवति, गृहीतमात्रगोचरत्वात् स्मृतिवदिति चेत् । न । यथार्थानु-

अतदधीनत्वात्, प्रमात्रपेक्षाऽनधीनत्वादित्यर्थः । पूर्वाविशिष्टता, पूर्व्वज्ञानान्यूनानतिरिक्तविषयतेत्यर्थः । यदि चोत्तरज्ञानापेक्षं पूर्व्वज्ञानमिति स्वविषये तत् प्रमाणं, तदा पूर्व्वज्ञानानपेक्षमुत्तरमपि तथेत्याह । तदनपेक्षत्वेनेति । यद्यप्युत्तरज्ञानं विशिष्टज्ञानत्वेन विशेषणज्ञानात्मकपूर्व्वज्ञानापेक्षम्, (१)अन्यथा सामग्रीतौल्ये धारावाहिधियां क्रमो न स्यात्, तथापि विशेषणमात्रविषयतया तथा, न विशिष्टविषयतयेति भावः । फलोत्पादेति । छिन्ने छिदा न सम्भ-

(१) अन्यथेति यद्यपि विशेषणज्ञानत्वेनैव हेतुत्वात् तथापि क्रमासम्भवः, तथापि फलबलेन तत्तद्विशेषणज्ञानत्वेन विशेषसामग्रीत्वमिति क्रमइति भावः । न च स्वरूपसत्क्रमिकद्वयोत्पत्तिकत्वेन क्रमः, सामग्रीतौल्ये तदेव नेत्याशयात् ।

भवत्वनिषेधे साध्ये बाधितत्वात् । अनधिगतार्थत्वे सिद्धसाधनात्, साध्यसमत्वाच्च । व्यवहारनिषेधे तन्निमित्तविरहोपाधिकत्वात्, बाधितत्वाच्च । न चानधिगतार्थत्वमेव तन्निमित्तं, विपर्य्ययेऽपि प्रमाव्यवहारप्रसङ्गात् । नापि यथार्थत्वविशिष्टमेतदेव, धारावहन-

---

वति, ज्ञाते तु ज्ञानान्तरं सम्भवत्येवेत्यर्थः । साध्यसमत्वादिति । प्रमात्वाभावस्य गृहीतमात्रग्राहित्वरूपतया साध्याविशेषादित्यर्थः । व्यवहारेति । प्रमाशब्दवाच्यत्वव्यतिरेके साध्ये तत्प्रवृत्तिनिमित्तरहितत्वमुपाधिरित्यर्थः । न चायमुपाधिः साधनाव्यापक इत्याह । न चेति । धारावहनेति । [१]इन्द्रियार्थसन्निकर्षाधारस्तृतीयः क्षणस्तदिन्द्रियार्थ-

---

(१) तृतीयक्षण इति सन्निकर्षापेक्षया । एवञ्च विनश्यदवस्थप्रथमज्ञानाधारत्वेनार्थान्तरप्रसङ्गनिरासाय मध्ये उत्पत्तीति । व्यासङ्गाधारक्षणे व्यभिचारवारणाय अव्यासक्तेति । यद्यपि तदा ज्ञानमुत्पद्यत एव, तथापि तदिन्द्रियार्थसन्निकर्षजज्ञानाभावाद् व्यभिचारः ।

यद्यप्येवं व्यासङ्गाभावस्यापि हेतुत्वाद् यावत्सहकारीत्यादिविशेषणाभावादेव न व्यभिचार इति तद्वैयर्थ्यम् । अन्यथा तदा ज्ञानोत्पत्त्यवश्यम्भावापत्तेः । तथापि तदतिरिक्तयावत्सहकारिविवक्षायाञ्च तदुक्त्यम् । प्रतिबन्धकाभावकारणतावच्छेदकत्ववादिमतेनेदमित्यन्ये । आलोकादिकिञ्चित्सहकारिविरहदशायां व्यभिचारादाह यावदिति । साकल्यसमवधाने इत्यर्थः । सन्निकर्षोत्पत्त्याधारक्षणे व्यभिचारादाह अनाद्येति क्षणविशेषणम् । इन्द्रियपदं तदिन्द्रियपरम् । अतोनेन्द्रियान्तरसन्निकर्षमादाय व्यभिचारः । ज्ञानोत्पत्त्यनाधारेन्द्रिये- व्यभिचारादाह क्षणेति ।

बुद्ध्यव्याप्तेः। न च तत्तत्कालकलाविशिष्टतया तत्राप्यनधिगतार्थत्वमुपपादनीयं*, सूक्ष्मोपाधीनामनाकलनात्। न चाज्ञातेष्वपि विशेषणेषु तज्जनितविशिष्टता प्रकाशते इति कल्पनीयं, स्वरूपेण तज्जननेऽनागतादिविशिष्टताऽनुभवविरोधात्। तज्ज्ञानेन तु तज्जनने सूर्य्यगत्यादीनामज्ञाने तद्विशिष्टताऽनुत्पादात्। न

---

सन्निकर्षजज्ञानोत्पत्त्याधारः अव्यासक्तमनसो यावत्सहकारिसाकल्ये सत्यनाद्येन्द्रियसन्निकर्षाधारक्षणत्वात् द्वितीयक्षणवदिति धारावहनबुद्धौ मानमाहुः।

ननु सूर्य्यगत्यादिरूपकालावच्छेदकोपाधिविशिष्टतत्तदर्थविषयत्वेन तासामप्यधिकविषयकत्वम्, एकस्मिन् क्षणे यौगपद्यनिषेधेन तस्यावश्यकत्वादित्यत आह। न चेति। घटोऽयं घटोऽयमित्यादिबुद्धिधारायां विषयभेदानुपलम्भात् ज्ञानायौगपद्यं स्वरूपसत्क्रमिकक्षणभेदमादायेति भावः। उपाधयो यदि स्वसत्तया विशिष्टतां जनयेयुः, तदाऽनधिगतधर्म्माणामविद्यमानतया तद्विशिष्टताऽनुभवो न स्यादित्याह। स्वरूपेणेति।

अथ स्वासत्त्वेऽपि ज्ञानसत्तया ते तां जनयन्ति, तत्राह। तज्ज्ञानेति। नन्वसन्तस्ते सत्तामात्रेण नासन्तस्तु स्वज्ञानसत्तया तां जनयन्तीति मोऽयंदोष इत्यत आह। न चैतस्यामिति। एतस्यां वि-

---

* तत्राप्यनधिगतगन्तृत्वमुपपादनीयम्,—इति क्वो०।

चैतस्यां प्रमाणमस्ति। नन्वनुपकार्य्यानुपकारकयोर्व्विशेषणविशेष्यभावे कथमतिप्रसङ्गो वारणीयः? व्यवच्छित्तिप्रत्यायनेन* व्यवच्छित्तौ स्वभावेन। अन्यथा तत्राप्यनवस्थानादिति†।

---

शिष्टतायाम्। विशेषणविशिष्यभावानुपपत्तिं तत्र मानमाह। नन्विति। विशेषणेन विशेष्ये विशिष्टताऽऽख्यधर्म्मोत्पादनं विनैव स्वसम्बन्धादेव व्यावृत्तिबुद्धिजननेन तदुपपत्तिरित्याह। व्यवच्छित्तीति। न च विशिष्टज्ञाने सा भासते, विशेषणविशेष्यसम्बन्धातिरिक्तायास्तस्या अननुभवात्।

ननु चाभावविशिष्टबुद्धेर्विशिष्टज्ञानत्वात् संयोगादिबाधेन वैशिष्ट्यमेव सम्बन्धो विषयोऽस्तु। मैवम्। तद्धि प्रत्यभावव्यक्ति भिन्नमभिन्नं वा? आद्ये तत्तत्स्वरूपरूपा विशेषणतैवास्तु किमनन्तवैशिष्ट्येन। अन्त्ये घटाभाववति पटवति पटाभावधीप्रसङ्गः, घटाभावपटाभाववैशिष्ट्ययोरभेदात्। तद्वैशिष्ट्यसत्त्वेऽपि तत्र पटाभावोनास्तीति चेत्। न। पटाभावाभावस्य भावत्वे पटस्य प्रतिबन्धकतया तदभावस्य हेतुत्वात्, तस्य च वैशिष्ट्यसम्बन्धेन तत्र सत्त्वात्। अभावत्वे च(१) तस्यापि वैशिष्ट्यसम्बन्धेन तत्र सत्त्वात्। न चाभावेऽपि समवायएव सम्बन्धः,

---

* प्रत्ययेन,—इति श्री०।

† तत्राप्यनवस्थानादिति,—इति सा०।

---

(१) अभावत्वे चेति अभावात्मनः पटाभावाभावस्य वैशिष्ट्यसम्बन्धेन तत्र स्वीकारे तस्यापि घटाभावस्यापि तेनैव सम्बन्धेन सत्त्वं स्यात्, वैशिष्ट्यस्यैकत्वाभ्युपगमादित्यर्थः। अधिकं प्रत्यक्षप्रकाशे।

ज्ञाततैवोपाधिरिति चेत्। न। निराकरिष्यमाणत्वात्। तत्सद्भावेऽपि वा स्मृतेरपि तथैव प्रमाण्यप्रसङ्गात्। जनकागोचरत्वेऽप्युत्तरोत्तरस्मृतौ पूर्व्वपूर्व्वस्मरणजनितज्ञातताऽवभासनात्। अस्तु वा प्रत्यक्षे यथा तथा, गृहीतविस्मृतार्थस्मृतौ का वार्त्ता*। अप्रमैवासाविति

---

तत्साधकविशिष्टबुद्धेरविशेषादिति वाच्यम्। समवेतकार्य्यत्वात् ध्वंसनाशे पटाद्युन्मज्जनप्रसङ्गात्। न च तत्र भावत्वं तन्त्रं, गौरवात् वैपरीत्यापत्तेश्चेति सङ्क्षेपः।

ज्ञाततैवेति। पूर्वपूर्वज्ञानाहितज्ञाततविशिष्टमुत्तरोत्तरज्ञानविषय इत्यनधिगतार्थतैव धारावहनबुद्धीनामित्यर्थः। तत्सद्भावेऽपीति। स्मृतिव्यावृत्त्यर्थमनधिगतेति व्यर्थविशेषणम्। तेनापि च न तद्व्यवच्छेदः, तत्रापि कारणीभूतानुभवजनितज्ञाततासत्त्वेनानधिगतार्थताऽनपायादित्यर्थः।

अथ स्मृतेर्जनकज्ञानविषयमात्रविषयत्वात् सा स्मृतौ न भासते, (१)तथापि पूर्वपूर्वस्मृतिजनितज्ञाततविशिष्टस्योत्तरोत्तरस्मृतौ भानादनधिगतार्थत्वसत्त्वादित्याह। जनकेति। न च स्मृतता नोत्तरोत्तरस्मृतिविषयोऽनुभवाविषयत्वादिति वाच्यम्। धारावहनबुद्धावप्युत्तरोत्तरबुद्धेः पूर्वपूर्वज्ञानाहितज्ञाततासमानकालोत्पत्तिकत्वेन तत्रापि तद्विषयत्वाभावापातादिति भावः।

---

* का गतिः,—इति श्री॰ का॰।

---

(१) तथापीति यद्यपि जनकागोचरत्वमत्रापि तुल्यं, तथाप्यनुपदमेवाग्रे परिहरिष्यतीति ध्येयम्।

चेत्। गतमिदानीं वेदप्रामाण्यप्रत्याशया। न ह्यनादौ संसारे स्वर्गकामो यजेतेति वाक्यार्थः केनचिन्नावगतः। सन्देहेऽपि प्रामाण्यसन्देहात्। न च तथापि कालकलाविशेषाः परिस्फुरन्ति। न चैकजन्मावच्छेदपरिभाषयेदं लक्षणं, तथाप्यनुभूतविस्मृतवेदार्थं प्रति अप्रामाण्यप्रसङ्गात्। कथन्तर्हि स्मृतेर्व्यवच्छेदः? अननुभवत्वेनैव। यथार्थो ह्यनुभवः प्रमेति प्रामाणिकाः पश्यन्ति*। तत्त्वज्ञानादिति सूत्रणात्। अव्यभिचारि ज्ञानमिति च। ननु स्मृतिः प्रमैव किं न स्यात् यथार्थज्ञानत्वात् प्रत्यक्षाद्यनुभूतिवदिति चेत्। न। सिद्धे व्यवहारे निमि-

---

अन्यच्च तत्सन्देहेऽप्युभयसिद्धप्रामाण्ये वेदे अधिगतार्थगोचरे प्रामाण्यासम्भव इति दुरुत्तरं व्यसनमित्याह। अस्तु वेति। तथापीति। एकजन्मनीत्यर्थः। अननुभवत्वेनैवेति। इममर्थमनुभवामीममर्थं स्मरामीत्यनुभवसाक्षिकावेवानुभवत्वस्मृतित्वे जातिविशेषावित्यर्थः। तत्त्वज्ञानादिति। ज्ञानपदमनुभवपरम्। एवमग्रेऽपि। नन्विति। यथार्थज्ञानत्वमेव प्रमापदप्रवृत्तिनिमित्तं लाघवात्, न तु तद्विशेषोऽनुभवत्वमपीत्यर्थः। सिद्धे इति। स्मृतेः प्रमात्वं यदि यथार्थज्ञानत्वमेव साध्यं, तदा सिद्धसाधनं साध्याविशेषश्च स्यादिति प्रमापदवाच्यत्वं साध्यं, तत्र च तन्निमित्तत्वमुपाधिरित्यर्थः।

---

* पठन्ति,—इति का०।

त्वानुसरणात्। न च स्वेच्छाकल्पितेन निमित्तेन लोकव्यवहारनियमनम्, अव्यवस्थया लोकव्यवहार-विप्लवप्रसङ्गात्। न च स्मृतिहेतौ प्रमाणाभियुक्तानां* महर्षीणां प्रमाणव्यवहारोऽस्ति, पृथगनुपदेशात्। उक्तेष्वन्तर्भावादनुपदेश इति चेत्। न। प्रत्यक्षस्या-साक्षात्कारिफलत्वानुपपत्तेः, लिङ्गशब्दादेश्च सत्तामा-त्रेण प्रतीत्यसाधनत्वादिति।

एवं व्यवस्थिते तर्क्यतेऽपि। यदियमनुभवैकविषया सती तन्मुखनिरीक्षणेन तद्यथार्थत्वायथार्थत्वे अनु-विधीयमाना तत्प्रामाण्यमव्यवस्थाप्य† न यथार्थतया

---

ननु यथार्थज्ञानत्वमेव तन्निमित्तमित्युक्तमित्यत आह। न चेति। न च स्मृतौति। यदि स्मृतौ प्रमापदस्येश्वरसङ्केतः स्यात्, तदा प्रमाणाभियुक्तानां संस्कारे प्रमाकरणत्वव्यवहारः स्यात्, न चैव-मित्यर्थः। उक्तेषु प्रत्यक्षादिष्वित्यर्थः।

अनपेक्षतयेति विवृणोति। तर्क्यतेऽपीति। अनुभवैकविषया, अनुभवमात्रविषयेत्यर्थः। तेनास्या विषयान्तरेऽपि न प्रमात्वमिति भावः। तद्यथार्थत्वेति। स्वजनकानुभवयथार्थत्वायथार्थत्वव्याप्त-यथार्थत्वायथार्थत्वेत्यर्थः। तत्प्रामाण्यमिति। स्वजनकानुभवप्रामाण्य-मित्यर्थः। अव्यवस्थाप्य अनवधार्य। यद्यपि स्वजनकानुभवप्रामाण्य-

---

* व्यवहाराभियुक्तानां,—इति आ०।

† तत्प्रामाण्यमनवस्थाप्य,—इति आ०।

व्यवहर्तुं शक्यते इति। व्यवहारोऽपि पूर्व्वानुभवस्य प्रमितित्वमपेक्षत्वात्। न तु स्मृतिः, नित्यं तदपेक्षणात्। असमीचीने ह्यनुभवे स्मृतिरपि तथैव।

नन्वेवमनुमानमप्यप्रमाणमापद्येत, मूलप्रत्यक्षानुविधानात्। न। विषयभेदात्। आगमस्तर्हि न प्रमाणं,

---

मनिश्चित्यापि प्रवृत्तिसंवादादिना अनुभवस्येव स्मृतेरपि प्रामाण्यग्रहः सम्भवत्येव; तथापि यदि स्मृतिः प्रमा स्यात्, तदा(१) स्वान्यूनानतिरिक्तविषयकानुभवप्रामाण्याप्रामाण्ये न स्यात्। व्यतिरेके इच्छादिर्दृष्टान्तः। धारावाहनबुद्धिषु पूर्वपूर्वबुद्धेर्विशेषणमात्रविषयतयोत्तरोत्तरबुद्धिष्वपेक्षा, स्मृतौ त्वन्यूनानतिरिक्तविषयतयेति न तत्र व्यभिचारः। धारावाहनबुद्ध्यन्यत्वेन वा विशेषणम्।

शक्यते इतीत्यस्यानन्तरं, न स्मृतिः प्रमेति शेषः। तदपेक्षणमेवाह। असमीचीने हीति। मूलेति। कारणव्याप्यादिप्रत्यक्षप्रामाण्यव्याप्यप्रामाण्यादित्यर्थः। विषयेति। व्याप्यादिप्रत्यक्षस्य लिङ्गलिङ्गिविषयत्वादनुमितौ च पक्षतावच्छेदकधर्म्मभाननैयत्येन

---

(१) तदाऽन्यूनानतिरिक्तेति एतच्च प्रागेव विवृतप्रायम्। नन्वापादकस्य प्रामाण्यस्य वैकल्यादिच्छादिकं नान्वयदृष्टान्तः। व्यतिरेकदृष्टान्तोऽपि न स्यात्। तादृशानुभवव्याप्यप्रामाण्यवत्त्वस्यापाद्यव्यतिरेकस्य व्याप्यत्वाभिमतवैकल्यादिति चेत्। नैवम्। आपाद्ये प्रामाण्यपदद्वयस्य यथार्थत्वमात्रपरत्वात्, आपादके च यथार्थानुभवपरत्वात्। एवञ्चेच्छादेरापाद्यव्यतिरेकस्य व्याप्यस्यापादकव्यतिरेकस्य व्यापकस्य च सत्त्वाद्व्यतिरेकदृष्टान्तत्वमिति।

तद्विषयमानान्तरानुविधानात् । न । प्रमात्वभेदात् । धारावाहिकबुद्धयस्तर्हि न प्रमाणम्, आद्यप्रमाणानुविधानात् । न । कारणविशुद्धिमात्रापेक्षया* प्रथमवदुत्तरासामपि पूर्व्वमुखनिरीक्षणाभावात् । कारणबलायातं† काकतालीयं पौर्व्वापर्य्यमिति ।

यदि हि‡ स्मृतिर्न प्रमितिः पूर्व्वानुभवे§ किं प्रमा-

---

तस्याधिकस्य भ्रमादित्यर्थः । तथापि श्रोतुर्वाक्यार्थप्रमायावाक्यप्रयोगमूलतदर्थविषयकज्ञानप्रामाण्यापेक्षित्वात्र प्रमात्वं स्यादित्याह । आगम इति । तथात्वेऽपि वक्तृश्रोतृरूपप्रमातृभेदोऽस्ति, स्मृतौ त्वेकस्यैव तथात्वमित्याह । प्रमात्विति ।

तर्हि विषयप्रमात्रोरभेदाद्धारावहनबुद्धयः पूर्वबुद्ध्यपेक्षाः प्रमा न स्युरित्याह । धारेति । यद्यपि बुद्धिक्रमान्यथाऽनुपपत्त्या पूर्वबुद्धेर्विशेषणज्ञानत्वेनोत्तरबुद्धिकारणत्वं, तथापि स्मृतिवदन्यूनविषयतया न कारणत्वं किन्तु विशेषणमात्रविषयत्वेनेत्युक्तम् । अन्यूनानतिरिक्तविषयत्वन्तु काकतालीयमित्याह । कारणेति ।

नन्वतीतानुभववैशिष्ट्यरूपा तत्ता न मानसप्रत्यक्षवेद्या, अनुभव-

---

* कारणमात्रविशुद्ध्यपेक्षया,—इति ख० ।

† कारणवशात्,—इति क्रो० का० ।

‡ यदि तर्हि,—इति क्रो० का० ।

§ पूर्व्वपूर्व्वानुभवे,—इति ख० ।

णम्। स्मृत्यन्यथाऽनुपपत्तिरिति चेत्। न। तथा कारण-मात्रसिद्धेः। न तु तेनानुभवेनैव भवितव्यमिति नियामकमस्ति। अननुभूतेऽपि तर्हि स्मरणं स्यादिति चेत्। किं न स्यात्। न ह्यत्र प्रमाणमस्ति। पूर्व्वानुभवाकारोल्लेखः* स्मृतेर्दृश्यते, सोऽन्यथा न स्यादिति चेत्। तत् किं बौद्धवद्विषयाकारान्यथानुपपत्त्या विषय-सिद्धिस्त्वयाऽपीष्यते, तथाभूतं ज्ञानमेव वा तत्सिद्धिः? आद्ये तद्वदेवानैकान्तिकत्वम्। न हि यदाकारं ज्ञानं,

सत्त्वकाले तदतीतत्वाभावात्; तदत्ययकाले च (१)विशेष्यासत्त्वादिति स्मृतिरेव तत्र मानमित्यगृहीतविषयतया सा प्रमा स्यादित्याह। यदी-त्यादिना, न तर्हीत्यन्तेन। तत्किमिति। सौत्रान्तिकानां घटाद्याकार-ज्ञानकादाचित्कत्वान्यथाऽनुपपत्त्या घटादिकल्पनवत् तत्ताऽऽकारान्य-थाऽनुपपत्त्या पूर्वानुभवकल्पनमित्यर्थः। तथाभूतमिति। बुद्धीनां निरा-कारतया विषयएव विशेषक इत्यर्थः। तद्वदेवेति। सौत्रान्तिकमते यथाऽनैकान्तिकत्वं, तथा त्वन्मतेऽपीत्यर्थः। तदेवाह। न हीति। आकारेण ज्ञानस्यार्थजन्यत्वमनुमेयमर्थसत्त्वमात्रं वा? आद्ये अना-गतार्थस्य वर्त्तमानज्ञानाकारत्वादनैकान्तिकम्। अन्त्ये अनागतस्य कादाचित्कत्वेऽपि शुक्तौ सर्व्वदा रजतत्वाकारत्वासत्त्वाद्रजतत्वाकार-

* पूर्व्वानुभवोल्लेखः,—इति क्री० आ०।

(१) विशेष्यस्येति अतीतादिविशेष्यकस्यानुभवस्येत्यर्थः।

तत्पूर्व्वकत्वं तस्येति नियमः; अनागतज्ञाने विभ्रमे च व्यभिचारात्। द्वितीये तु* स्मृतिप्रामाण्यमवर्ज्जनीयम्।

मा भूत् पूर्व्वानुभवसिद्धिः, किं नश्छिन्नमिति चेत्। न तर्हि स्मृत्यनुभवयोः कार्य्यकारणभावसिद्धिरिति। न। तदप्रामाण्येऽपि† पूर्व्वापरावस्थावदात्मप्रत्यभिज्ञानप्रा-

---

भ्रमेऽनैकान्तिकमित्यर्थः। द्वितीये चेति। तत्ताविषया स्मृतिरेव तत्तासिद्धिरिति सा प्रमा स्यादेवेत्यर्थः। तथा च स्मृत्यनुभवयोः कार्य्यकारणभावान्यथाऽनुपपत्तेः स्मृतिः प्रमेति भावः। (१)अतीतानुभवविशिष्टे स्मृतिवैशिष्ट्यप्रत्यभिज्ञानं स्मृत्यनुभवयोः कार्य्यकारणभावग्राहकमित्यन्यथोपपत्त्या न स्मृतिः प्रमेत्याह। तदप्रामाण्येऽपीति। प्रत्यभिज्ञानस्वरूपमाह। योऽहमिति।

ननु केयं तत्ता? न तावदतीतानुभवविषयत्वम्। अतीतानुभवविषयत्वस्यानुभवाविषयतया स्मृत्या तदनुल्लेखापत्तेः। न च तस्या-

---

* द्वितीये च,—इति प्रकाशसम्मतः पाठः।

† कार्य्यकारणभावसिद्धिरिति तदप्रामाण्येऽपि,—इति का०।

---

(१) अतीतानुभवविशिष्ट इति यद्यप्येवं पौर्व्वापर्य्यमात्रं सिध्यति, न तु कार्य्यकारणभावः। अन्यथा योऽहं घटमद्राक्षं सोऽहं स्पृशामीत्यादावपि तथा स्यात्। तथाप्यननुभूते स्मरणाभावादन्वयव्यतिरेकादिसहकृतमनसा तद्ग्रह इति भावः।

**साम्यादेव तदुपपत्तेः। योऽहमन्वभवमसुमर्थं, सोऽहं स्मरामीति मानसप्रत्यक्षमस्तीति।**

---

नुभवाविषयत्वेऽपि यदा ज्ञानान्तरेण ग्रहणं, तदा स घट इति स्मृतिः, अन्यथा प्रमुष्टतत्तांशा घट इति वाच्यम्। अतीतानुभवविषयत्वस्यानुमितौ भानेऽपि स इति बुद्धेरभावात्। नाप्यतीतधर्मवैशिष्ट्यम्। यदि हि योवस्तुतोऽतीतो धर्म्मः तद्वैशिष्ट्यं तत्ता, तदाऽनुभवेऽपि तद्विषयत्वात्तत्तोल्लेखापत्तिः। अतीतधर्मविशिष्टः स इति सह प्रयोगानुपपत्तिश्च। नाप्यतीतत्वेन भासते यो धर्मः, तद्वैशिष्ट्यम्। भासमानधर्मस्यातीतत्वेनानुभवाविषयत्वात्, प्रत्युत वर्त्तमानत्वेनानुभवात्, स्मृतौ तत्तोल्लेखाभावापत्तेः। नाप्यतीतसमयसम्बन्धः। अनागतगोचरस्मृतिप्रत्यभिज्ञयोस्तत्तोल्लेखाभावापत्तेः। इदन्ताऽपि न तद्वृत्तिगुणादि, गुणादावभावात्। नापि प्रत्यक्षज्ञानगोचरत्वम्। अचाक्षुषत्वापत्तेः।

उच्यते। अनुभवे यएव धर्मः कालो वा वर्त्तमानत्वेन भासते, सएव स्मृतावपि। तयोरेकविषयत्वेऽपि स्मृतावेव तच्छब्दोल्लेखः। संस्कारजज्ञानस्यैव तच्छब्दप्रयोगहेतुत्वात्। प्रत्यभिज्ञाने तथा कल्पनात्। तत्रैव च प्रत्यक्षानुभवेनेदंशब्दप्रयोगः। विषयकृतस्तु स्मृत्यनुभवयोर्विशेषो नास्त्येव। अतएवायं घट इत्यनुभवादयं घट इति न स्मृतिः, स घट इति स्मृतेश्च स घट इति नानुभवः। सह प्रयोगस्तु धर्मविशेषमादायेत्यस्मत्पितृचरणाः।

**परलक्षणमभ्युपगम्यानधिगतार्थगन्तृत्वमीश्वरज्ञानेऽप्यस्तीत्याह ।**

न च गृहीतग्राहित्वमीश्वरज्ञानस्य, तदीयज्ञानान्तरागोचरत्वाद्विश्वस्य । न च तदेव ज्ञानं कालभेदेनाप्रमाणम्, अनपेक्षत्वस्यापराहत्तेः । तथापि वा अप्रामाण्येऽतिप्रसङ्गादिति ।

---

न चेति । ईश्वरस्य ज्ञानान्तराभावान्न तज्ज्ञानं गृहीतग्राहीत्यर्थः । पुरुषान्तरज्ञानान्तरगोचरत्वेन गृहीतग्राहीत्वे अभिमताऽपि प्रमा न स्यात् ।

अथ [१]तद्विषयज्ञानोत्तरकालवर्त्तिसमानाश्रयतद्विषयकज्ञानत्वमेव गृहीतग्राहित्वम् । तन्न । बुद्धिमात्रस्य प्रमात्वाभावापत्तेः । यद्विषया बुद्धिरुत्पन्ना तद्विषयायाएव तस्याः स्वोत्पत्त्युत्तरक्षणेऽपि सत्त्वादिति भावः । नन्वीश्वरस्य ज्ञानान्तराभावेऽपि प्रथमक्षणे गृहीतस्यैव द्वितीयादिक्षणे ज्ञानाद्गृहीतग्राहित्वमस्त्येवेत्यत आह । न चेति । अनपेक्षत्वस्येति । न हि स्मृतिवदुत्तरकालबुद्धिविषयत्वे पूर्व्वकालीनतद्विषयज्ञानापेक्षा ईश्वरज्ञानेऽस्तीत्यर्थः । अतिप्रसङ्गादिति । सर्व्वज्ञानानां द्वितीयादिक्षणे ग्रहणरूपत्वेनाप्रमात्वापातादित्यर्थः । वस्तुतोऽगृहीतेत्यत्र निष्ठाऽर्थस्य ध्वंसस्यासम्भवएवेति भावः ।

---

(१) तद्विषयेति न चोत्तरकालत्वं व्यवहितकालत्वं विवक्षितमिति वाच्यम् । मासाद्यनन्तरतद्विषयज्ञानस्याप्यप्रमात्वव्यवहारादिति भावः । यद्यपि बुद्धिमात्रस्येत्यादिना निरासान्नेयं शङ्का, तथापि मूले तदनिरासात्तत्र तदविरोध इति भावः ।

स्यादेतत्। अनुपकारकं विषयस्य, तदीयमेतदीयं वा न भवितुमर्हत्यविशेषात्। न च तस्येत्यनियतं तत्र प्रमाणमतिप्रसङ्गात्। न च तदभिन्नमन्तरेण तदुपकारस्योत्पत्तिः, तथाऽनभ्युपगमात्। अभ्युपगमे वा, कार्य्यत्वस्यानैकान्तिकत्वात्। अत्रोच्यते।

---

(१)ननु विषयनियमान्यथाऽनुपपत्त्या तदुपपादको विषयनिष्ठो-ज्ञानजन्योधर्मः स्वीकार्य्यः। तस्य च तदुपादानज्ञानजन्यत्वे तदुत्पत्तेः प्राक् तद्विषयत्वाभावात् कथं तदुत्पत्तिः। तदुपादानज्ञानाजन्यत्वे च क्षित्यादिसकर्तृकत्वग्राहकं कार्य्यत्वं तत्रैवानैकान्तिकमित्याह। स्यादे-तदिति। न चेति। तदीयोऽयं विषय इति नानियतं, किन्तु नियतमेव। तन्नियामकस्तज्जन्यधर्मएव वाच्यः। तेन तज्जन्यज्ञातताऽऽश्रयत्वमेव तद्विषयत्वमित्यर्थः।

---

(१) नन्विति ननु कार्य्यत्वानैकान्तिकोद्भावनस्य नायमवसरः। न च ज्ञाततामादायाग्रहीतग्राहित्वमुपपादयितुं तत्साधनमेवेदमिति वाच्यम्। पूर्व्वनिरस्तत्वात्। न च तदभिज्ञानमित्यादिना तदुत्पत्त्य-सम्भवोपन्यासस्य विरुद्धत्वापाताच्च। इति चेत्। नैवम्। यथार्था-नुभवत्वादिकं प्रामाण्यं ज्ञानस्य स्वविषये स्यात्, विषयता च नियामकं विनाऽनुपपन्ना, ज्ञाततायास्तथात्वे कार्य्यत्वानैकान्तिकत्वा-पत्त्या तदुपादानज्ञानजन्यत्वमवश्यं वाच्यम्। तच्च तदुत्पत्तेः प्राक् तद्विषयत्वाभावादसम्भवीति न प्रामाण्यव्यवस्थितिरिति तटस्थाशङ्का-परत्वेनास्य सङ्गतत्वात्।

स्वभावनियमाभावादुपकारोऽपि दुर्घटः।
सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा ॥२॥

विशेषाभावात्तत्रैव फलं नान्यत्रेत्यस्यापि नियमस्यानुपपत्तेः। स्वभावनियमेन चोपपत्तौ तथैव विषयव्यवस्थोपपत्तेः। अवश्यञ्चैतदनुमन्तव्यम्*, अतीतादिविषयत्वानुरोधात्†। न हि तत्र ज्ञानेन किञ्चित् क्रियते इति शक्यमवगन्तुम्। असत्त्वात्। न च तद्धर्म्मसामान्याधारं किञ्चित् क्रियते इति युक्तं, तेन तस्यैव विषयत्व-

ज्ञानस्य ज्ञेयनिष्ठोपकाराधानेऽपि नियामकः स्वभावएव वाच्यः। तथा च ततएव विषयनियमोपपत्तौ किमुपकाराधानेनेत्याह। स्वभावेति। विद्यमानेऽर्थे ज्ञानजन्योपकारसम्भवेऽप्यतीताद्यर्थे तदसम्भवादन्यथा तत्र स्वभावएव विषयत्वनियामकः, तथा विद्यमानेऽप्यर्थेऽस्त्वित्याह। सुघटत्वेऽपीति।

अतीतादिघटादौ भासमाने घटत्वादेरपि भासनात्तत्रैव ज्ञाततोत्पत्तिः स्यादित्यपि नास्तीत्याह। न चेति। तथा सति ज्ञाततान्नाश्रयत्वाद्घटादिर्विषयो न स्यात्, घटत्वादौ ज्ञातताऽऽधानात्तस्यैव तद्विषयत्वादित्यर्थः। ननु धर्मधर्मिणोस्तादात्म्यात्तद्धर्मज्ञातता तस्यैवे-

* इत्यनुमन्तव्यम्,—इति श्री०।

† अतीतादिविषयानुरोधात्,—इति का०।

प्राप्तेः। तादात्म्याद्विशेषस्यापि सैव ज्ञाततेति चेत्। तत् किं चक्षुषा घटे ज्ञायमाने रसोऽपि ज्ञायते, तादात्म्यात्। घटाकारेण ज्ञायतएवासौ रसः* इति चेत्। अथ रसाकारेण किं न ज्ञायते। तेन रूपेण ज्ञातताऽना-धारत्वादिति चेत्। न तर्हि वर्त्तमानसामान्यज्ञानेऽप्य-तीतानागतादिज्ञानं, तेनाकारेण प्राकट्यानाधारत्वा-दिति।

---

त्याह। तादात्म्यादिति। तत्किमिति। ननु धर्मिणोधर्माभेदेऽपि धर्मस्य न धर्म्यभेदः, भेदाभेदाङ्गीकारात्। तथा च धर्मे ज्ञायमाने तदभिन्नोधर्मी ज्ञायतां, धर्मिणि ज्ञायमाने तद्भिन्नोधर्मः कथं ज्ञायेत। मैवम्। भेदाभेदस्य विरोधेनासम्भवात्।

ननु धात्वर्थावच्छेदकपरसमवेतक्रियाफलशालित्वं(१) कर्मत्वमि-ति ज्ञानक्रियायाः स्वकर्मनिष्ठफलजनकत्वाज्ज्ञातता स्यादित्याह।

---

* घटाकारेणासौ ज्ञायतएव,—इति श्री० का०।

---

(१) ननु चैत्रो गच्छतीत्यत्र परसमवेतगमनक्रियायाः फलमुत्तरदेश-संयोगवत् पूर्व्वदेशविभागोऽपीति पूर्व्वदेशेऽतिव्याप्तिरित्यत उक्तं, धात्वर्थतावच्छेदकेति फलविशेषणम्। उत्तरसंयोगावच्छिन्नस्पन्दस्य धात्वर्थत्वाद्विभागो न तथेत्याहुः। घटं जानाति चैत्र इत्यत्र ज्ञान-क्रियाफलमिच्छादि, तच्छालितयाऽऽत्मन्यतिव्याप्तिरित्यत उक्तं परेति। न चाभावो घटमाश्रयते इत्यादावव्याप्तिः, आश्रयणक्रियाया अभावे समवेतत्वाभावादिति वाच्यम्। परसमवेतपदस्य सम्बन्धपरत्वात्।

ननु क्रियया कर्म्मणि किञ्चित्कर्त्तव्यमिति व्याप्तेरस्त्वनुमानम्। न।

अनैकान्त्याद्सिद्धेर्व्वा* न च लिङ्गमिह क्रिया।
तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥३॥

धात्वर्थमात्राभिप्रायेण प्रयोगे संयोगादिभिरनैकान्तात्। न हि शरसंयोगेन गगने किञ्चित् क्रियते, अन्त्यशब्दाभिव्यक्त्या वा। स्पन्दाभिप्रायेणासिद्धेः।

---

नन्विति। क्रिया न धात्वर्थमात्रं, शरसंयोगादिना धात्वर्थेन कर्मणि गगनादौ तदजननादनैकान्तिकत्वात्। नापि स्पन्दः, ज्ञाने स्पन्दत्वाभावात्। नापि करणव्यापारत्वं, शब्दादिव्यापारपदार्थस्मृत्यादिभिरनैकान्तिकत्वादित्याह। अनैकान्त्यादिति। इह ज्ञाततायाम्। ननु प्रत्यक्षैव ज्ञातता, संयुक्त इतिवत् ज्ञात इत्यनुभवादित्यत आह। तद्वैशिष्ट्येति। ज्ञातताऽनुभवो ज्ञानवैशिष्ट्यमात्रविषयको [१]नातिरिक्तविषयतायां मानमित्यर्थः।

अन्त्यशब्देति। न चान्त्यशब्दाभिव्यक्त्या तत्र ज्ञाततैवोत्पद्यते इति वाच्यम्। [२]तस्याव्यवहितोत्तरक्षण एव नाशात्। समवायिकारणस्य

---

* अनेकान्तादसिद्धेर्व्वा,—इति क्री० आ०।

---

(१) अतिरिक्तेति ज्ञाततायामित्यर्थः।

(२) तस्येति नन्वेवं प्रत्यक्षमपि कथं स्यादिति वाच्यम्। पूर्व्ववर्त्तितामात्रेणैव तस्य तद्धेतुत्वात्। समवायिकारणमात्रस्यैव कार्य्यसमानकालत्वनियमादिति भावः।

प्राप्तेः। तादात्म्यादिविशेषस्यापि सैव ज्ञाततेति चेत्। तत् किं चक्षुषा घटे ज्ञायमाने रसोऽपि ज्ञायते, तादात्म्यात्। घटाकारेण ज्ञायतएवासौ रसः* इति चेत्। अथ रसाकारेण किं न ज्ञायते। तेन रूपेण ज्ञातताऽना-धारत्वादिति चेत्। न तर्हि वर्त्तमानसामान्यज्ञानेऽप्य-तीतानागतादिज्ञानं, तेनाकारेण प्राकट्यानाधारत्वा-दिति।

---

त्याह। तादात्म्यादिति। तत्किमिति। ननु धर्मिणोधर्माभेदेऽपि धर्मस्य न धर्म्यभेदः, भेदाभेदाङ्गीकारात्। तथा च धर्मे ज्ञायमाने तदभिन्नोधर्मी ज्ञायतां, धर्मिणि ज्ञायमाने तद्भिन्नोधर्मः कथं ज्ञायेत। नैवम्। भेदाभेदस्य विरोधेनासम्भवात्।

ननु धात्वर्थावच्छेदकपरसमवेतक्रियाफलशालित्वं(१) कर्मत्वमि-ति ज्ञानक्रियायाः स्वकर्मनिष्ठफलजनकत्वाज्ज्ञातता स्यादित्याह।

---

* घटाकारेणासौ ज्ञायतएव,—इति क्री० का०।

---

(१) ननु चैत्रो गच्छतीत्यत्र परसमवेतगमनक्रियायाः फलमुत्तरदेश-संयोगवत् पूर्व्वदेशविभागोऽपीति पूर्व्वदेशेऽतिव्याप्तिरित्यत उक्तं, धात्वर्थतावच्छेदकेति फलविशेषणम्। उत्तरसंयोगावच्छिन्नस्पन्दस्य धात्वर्थत्वाद्विभागो न तथेत्याहुः। घटं जानाति चैत्र इत्यत्र ज्ञान-क्रियाफलमिच्छादि, तच्छालितयाऽऽत्मन्यतिव्याप्तिरित्यत उक्तं परेति। न चाभावो घटमाश्रयते इत्यादावव्याप्तिः, आश्रयणक्रियाया अभावे समवेतत्वाभावादिति वाच्यम्। परसमवेतपदस्य सम्बन्धपरत्वात्।

ननु क्रियया कर्म्मणि किञ्चित्कर्त्तव्यमिति व्याप्तेरस्त्वनुमानम्। न।

अनैकान्त्यादसिद्धेर्व्वा* न च लिङ्गमिह क्रिया।
तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥३॥

धात्वर्थमात्राभिप्रायेण प्रयोगे संयोगादिभिरनैकान्तात्। न हि शरसंयोगेन गगने किञ्चित् क्रियते, अन्त्यशब्दाभिव्यक्त्या वा। स्पन्दाभिप्रायेणासिद्धेः।

---

नन्विति। क्रिया न धात्वर्थमात्रं, शरसंयोगादिना धात्वर्थेन कर्मणि गगनादौ तदजननादनैकान्तिकत्वात्। नापि स्पन्दः, ज्ञाने स्पन्दत्वाभावात्। नापि करणव्यापारत्वं, शब्दादिव्यापारपदार्थस्मृत्यादिभिरनैकान्तिकत्वादित्याह। अनैकान्त्यादिति। इह ज्ञाततायाम्। ननु प्रत्यक्षैव ज्ञातता, संयुक्त इतिवत् ज्ञात इत्यनुभवादित्यत आह। तद्वैशिष्ट्येति। ज्ञातताऽनुभवो ज्ञानवैशिष्ट्यमात्रविषयको (१)नातिरिक्तविषयतायां मानमित्यर्थः।

अन्त्यशब्देति। न चान्त्यशब्दाभिव्यक्त्या तत्र ज्ञाततैवोत्पद्यते इति वाच्यम्। (२)तस्याव्यवहितोत्तरक्षणएव नाशात्। समवायिकारणस्य

---

* अनेकान्तादसिद्धेर्व्वा,—इति क्री० आ०।

---

(१) अतिरिक्तेति ज्ञाततायामित्यर्थः।

(२) तस्येति नचैवं प्रत्यक्षमपि कथं स्यादिति वाच्यम्। पूर्व्ववर्त्तितामात्रेणैव तस्य तद्धेतुत्वात्। समवायिकारणमात्रस्यैव कार्य्यसमानकालत्वनियमादिति भावः।

व्यापाराभिप्रायेण शब्दलिङ्गेन्द्रियव्यापारैर्व्यभिचारात्*। न हि तैः प्रमेये किञ्चित् क्रियते, अपि तु प्रमातर्य्येव। फलाभिप्रायेणापि तथा। अन्ततस्तेनैवानेकान्तात्, अनवस्थानाच्च। आशुविनाशिधर्म्माभिप्रायेण हित्वादिभिरनियमात्। आशुकारकाभिप्रायेण कर्म्मण्यसिद्धेः। कर्म्मण्याशुकारकं ज्ञानमित्येव हि साध्यम्। कर्त्तर्य्याशुकारकत्वस्य कर्म्मोपकारत्वेनाव्याप्तेः। शब्दादिव्यापारैरेवानेकान्तात्।

---

च कार्य्यसमानकालतानियमात्। शब्दनित्यत्वस्य च निषेधादिति भावः। असिद्धेरिति। ज्ञानक्रिया न स्पन्द इत्यर्थः। ननु क्रिया फलमत्र, यद्धि फलं तत्प्रमेयनिष्ठकिञ्चिज्जनकं, प्रयत्नवदात्म† संयोगवदित्यत आह। फलेति। अन्तत इति। फलेनापि फलजननेऽनवस्थेति क्वचिद्विश्रान्तौ तेनैव व्यभिचार इत्यर्थः। आशुविनाशित्वं क्षणचतुष्टयानवस्थायित्वम्। अनियमात्, व्यभिचारादित्यर्थः। कर्मण्याशुकारकत्वं हेतुः, कर्त्तर्य्याशुकारकत्वं वा, आशुकारकत्वमात्रं वा? नाद्यः, साध्याविशिष्टतया हेतोरसिद्धत्वादित्याह। कर्मणीति। न द्वितीयतृतीयावनेकान्तादित्याह। कर्त्तरीति। शब्दादिव्यापारैः पदार्थस्मृतिलिङ्गपरामर्शादिभिर्वाक्यार्थज्ञानानुमित्यादिकं कर्त्तर्य्याशु क्रियते। न च कर्मणि वाक्यार्थे अनुमेयादौ वा किञ्चित् क्रियते इत्य-

---

* व्यापारे व्यभिचारात्,—इति ख्या०।

† प्रयत्नवदात्मशरीर,—इति का०।

स्यादेतत्। अनुभवसिद्धमेव प्राकट्यम्। तथाहि, ज्ञातोऽयमर्थ इति सामान्यतः, साक्षात्कृतोऽयमर्थ-इति विशेषतो विषयविशेषणमेव किञ्चित् परिस्फुरतीति चेत्। तदसत्। यथाहि,

अर्थेनैव विशेषोहि निराकारतया धियाम्।

तथा,

क्रिययैव विशेषोहि व्यवहारेषु कर्म्मणाम्॥ ४॥

किं न पश्यसि, घटक्रिया पटक्रियेतिवत् कृतो घटः करिष्यते घट इत्यादि। तथैव गृहाण, घटज्ञानं पट-

---

नैकान्तिकमित्यर्थः। कारिकोत्तरार्द्धं* व्याख्यातुं शङ्कते। अनुभवेति।

निराकारमपि ज्ञानं यथा विषयेण नीलत्वादिना नीलज्ञानाद्युच्यते, तथा ज्ञानरूपक्रिययैव ज्ञातो घट इति धीव्यपदेशौ। इत्थमनभ्युपगमे च कृतो घट इत्यादावपि कृत्यादिजनितधर्माधारो-घटः स्यात्। न चैतत् त्वयेष्यते,—इति परिहरति। यथा हीति। घटक्रियेत्यत्र क्रियायामर्थोविशेषकः, कृतो घट इत्यत्रार्थे क्रिया विशेषिकेति भेदः। एवं घटज्ञानमित्यत्रार्थो ज्ञाने विशेषणं, ज्ञातो-घट इत्यत्रार्थे ज्ञानं विशेषणम्।

ननु घटोऽयमिति ज्ञानं घटधर्मिककिञ्चिद्धर्मजनकं घटज्ञानत्वात् अपेक्षाबुद्धिवत्। न चापेक्षाबुद्धित्वमुपाधिः, घटसंयोगादि-

---

* कारिकार्थम्,—इति सो०।

ज्ञानमितिवत् ज्ञातो घटो ज्ञास्यते ज्ञायते इति। कथमसंबद्धयोर्धर्म्मधर्म्मिभाव इति चेत्। ध्वस्तो घट-इति यथा। एतदपि कथमिति चेत्। नूनं ध्वंसेनापि घटे किञ्चित् क्रियते इति वक्तुमध्यवसितोऽसि। तन्निरूपणाधीननिरूपणो ध्वंसः स्वभावादेव तदीय-इति किमत्र संबन्धान्तरेणेति चेत्। प्रकृतेऽप्येवमेव।

जनकावयवसंयोगादौ साध्याव्यापकत्वात्। मैवम्। [१]अप्रयोजकत्वात्। अन्यथेच्छा स्वविषयनिष्ठकिञ्चिद्धर्मजनिका सविषयकत्वात् बुद्धिवदित्यादेरापत्तेः। तथापि ज्ञातोघट इति ज्ञानं विशेषण-विशेष्ययोः सम्बन्धविषयकं विशिष्टज्ञानत्वात्, गौरिति ज्ञानवत्। वर्त्तमानेऽर्थे बाधकाभावात्। [२]अन्यथा समवायोऽपि न सिद्ध्येदिति चेत्। न। अतीतानागतयोर्ज्ञातताया अभावेन ज्ञातव्यवहारा-भावापत्तेः। तस्य ज्ञाततासाध्यत्वात्। तत्र ज्ञानविषयावेव तद्वि-षयाविति चेत्। न। वर्त्तमानेऽपि तयोरेव तद्विषयत्वापत्तेः। अतीतादिवर्त्तमानतत्प्रतीत्योर्वैलक्षण्याननुभवात्।

अथ घटपटयोरेकज्ञानविषयत्वेऽपि घटत्वेन घटो ज्ञातः पटत्वेन पटो ज्ञात इति ज्ञातताभेदभानात् ज्ञानभिन्ना ज्ञाततेति चेत्। न। तस्यैव ज्ञानस्य सम्बन्धस्तत्र तत्र तेन तेन धर्मेण निरूप्यते इति ज्ञानस्वभावादेव नियमादिति भावः।

(१) अप्रयोजकत्वादित्युपलक्षणम्। पक्षधर्म्मावच्छिन्नसाध्यव्यापकमपेक्षा-बुद्धित्वमुपाधिरित्यपि द्रष्टव्यम्।

(२) अन्यथेति यदि सम्बन्धं विना विशिष्टधीः, तदेत्यर्थः।

एतेन फलानाधारत्वादर्थः कथं कर्म्मेति निरस्तम्। विनाश्यवत्करणव्यापारविषयत्वेन तदुपपत्तेः। स्वाभाविकफलनिरूपकत्वञ्च तुल्यम्।

ननु ज्ञानमतीन्द्रियत्वादसाधारणकार्य्यानुमेयं तदभावे कथमनुमीयेत*, अप्रतीतञ्च कथं व्यवहारपथमवतरेदिति ज्ञानव्यवहारान्यथाऽनुपपत्त्या ज्ञाततकल्पनम्। तदप्यसत्। परस्पराश्रयप्रसङ्गात्। ज्ञाततया हि ज्ञानमनुमीयेत, ज्ञाते च तद्व्यवहारान्यथानुपपत्तिः तां ज्ञापयेत्। कुतश्च ज्ञानमतीन्द्रियम्? इन्द्रियेणानुपलभ्यमानत्वादिति चेत्। न। अनुमानोपन्यासे† साध्या-

---

प्रतिबन्दिमुक्त्वा मूलयुक्तिमाह। तन्निरूपणेति। ननु ज्ञानजन्यफलानाश्रयत्वादर्थः कर्म न स्यादित्यत आह। एतेनेति। परसमवेतक्रियाफलशालित्वं न कर्मत्वम्। आत्मानं जानातीत्यव्याप्तेः। किन्तु करणव्यापारविषयत्वम्। तच्चात्रास्त्येवेत्याह। विनाश्यवदिति। अर्थो ज्ञानस्य कर्मैव न भवति, अतीतादेरप्यर्थत्वात्। कारकविशेषस्य च कर्मत्वात्, अतीतानागतं जानामीति द्वितीया प्रयोगसाधुरिति तु तत्त्वम्। स्वाभाविकेति। यथा कर्तृव्यापारफलं विनाशः प्रतियोगिनिरूप्यः, तथा ज्ञानमपि विषयनिरूप्यमित्यर्थः।

---

* कथमनुमीयताम्,—इति स्वा० श्री०।

† अनुमानपक्षे,—इति का० स्वा०।

विशिष्टत्वात्। अनुपलब्धिमात्रोपन्यासे तु योग्यताऽविशेषिताऽसौ कथमैन्द्रियकोपलम्भाभावं गमयेत्। तद्विशेषणे तु कथमतीन्द्रियं ज्ञानमिति। तथाविधज्ञातताऽनाश्रयत्वादिति* चेत्। न। आश्रयासिद्धेः। व्यवहारान्यथाऽनुपपत्त्यैव सिद्ध आश्रय इति चेत्। न। ज्ञानहेतुनैव तदुपपत्तेः। तस्यात्ममनःसंयोगादिरूपस्य सत्त्वेऽपि सुषुप्तिदशायामर्थव्यवहाराभावान्नैवमिति चेत्। न। तावन्मात्रस्य व्यवहाराहेतुत्वात्। अन्यथा

---

तद्विशेषणे त्विति। यदि योग्यानुपलब्ध्या योग्यस्य ज्ञानस्याभावोऽभ्युपगम्यते, तदा सिद्धमैन्द्रियकत्वं ज्ञानस्येत्यर्थः। तथाविधेति। साक्षात्कृतताऽनाश्रयत्वादित्यर्थः। आश्रयेति। ज्ञानस्याप्रत्यक्षत्वे मानान्तरासम्भवेनाश्रयस्य ज्ञानस्यासिद्धेरित्यर्थः। ज्ञानस्य प्रत्यक्षतया स्वरूपासिद्धेश्चेति भावः। अज्ञाते घटादिव्यवहारो न स्यात्, तस्य व्यवहर्त्तव्यज्ञानसाध्यत्वादिति कार्य्येण कारणानुमानात् सिद्ध आश्रय इत्याह। व्यवहारेति। ज्ञानहेतुत्वेनाभिमतादेवावश्यकाद्व्यवहारोपपत्तौ न तेन ज्ञानानुमानमित्याह। ज्ञानेति। ज्ञानहेतुसद्भावेऽपि व्यवहाराभावान्न तेनान्यथासिद्धिरित्याह। तस्येति। ज्ञानहेतुसद्भावे सुषुप्तौ कुतो ज्ञानमेव न जायते? तावन्मात्रस्याहेतुत्वादिति यदि,

---

* नाधारत्वादिति,—इति पा०।

ज्ञानस्वीकारेऽपि तुल्यत्वात् । स्मरणान्यथाऽनुपपत्त्येति चेत् । न । तस्याप्यसिद्धेः । अस्ति तावद्व्यवहारनिमित्तं किञ्चिदिति चेत् । किमतः ? न ह्येतावता ज्ञानं तदिति सिध्यति, तस्यैवासिद्धेः । तथापि नियतस्य कर्त्तुः प्रवृत्तेः कर्त्तृधर्म्मेणैव केनचित् प्रवृत्तिहेतुना भवितव्यमिति चेत् । अस्त्विच्छा प्रत्यक्षसिद्धा, न तु ज्ञानम् । सैव कथं नियताधिकरणे उत्पद्यतामिति* चेत् । न । ज्ञाना-

---

तदा या ज्ञानसामग्री सा व्यवहारसामग्र्यस्तु किमान्तरालिकेन ज्ञानेनेत्याह । तावन्मात्रस्येति । अन्यथेति । ज्ञानमेव तदा किं न स्यादित्यर्थः । तस्यापीति । स्मरणस्यापि ज्ञानत्वेनातीन्द्रियत्वादसिद्धि-रित्यर्थः । (१)अत्राप्यनुभवकारणादेव स्मरणोत्पत्तिरित्यन्यथासिद्धि-रिति भावः । तदिति । व्यवहारनिमित्तमित्यर्थः । तस्यैवेति । ज्ञाना-सिद्धा व्यवहारे तज्जन्यत्वानिश्चयादित्यर्थः । कर्त्तृधर्मप्रवृत्तेः† कर्त्तृधर्म-कार्य्यत्वात् कर्त्तृधर्मतया ज्ञानं सिध्येदित्याह । तथापीति । इच्छा-

---

* नियताधिकरणोत्पद्यतामिति,—इति क्री० का० ।

† कर्त्तृप्रवृत्तेः, इति सो० ।

---

(१) अस्तु वा स्मरणं, तथापि तदन्यथाऽनुपपत्त्या नानुभवसिद्धिः, तत्का-रणेनान्यथासिद्धेरित्याह अत्रापीति ।

4

विशिष्टत्वात्। अनुपलब्धिमात्रोपन्यासे तु योग्यताऽविशेषिताऽसौ कथमैन्द्रियकोपलम्भाभावं गमयेत्। तद्विशेषणे तु कथमतीन्द्रियं ज्ञानमिति। तथाविधज्ञातताऽनाश्रयत्वादिति* चेत्। न। आश्रयासिद्धेः। व्यवहारान्यथाऽनुपपत्त्यैव सिद्ध आश्रय इति चेत्। न। ज्ञानहेतुनैव तदुपपत्तेः। तस्यात्ममनःसंयोगादिरूपस्य सत्त्वेऽपि सुषुप्तिदशायामर्थव्यवहाराभावान्नैवमिति चेत्। न। तावन्मात्रस्य व्यवहाराहेतुत्वात्। अन्यथा

---

तद्विशेषणे त्विति। यदि योग्यानुपलब्ध्या योग्यस्य ज्ञानस्याभावोऽभ्युपगम्यते, तदा सिद्धमैन्द्रियकत्वं ज्ञानस्येत्यर्थः। तथाविधेति। साक्षात्कृतताऽनाश्रयत्वादित्यर्थः। आश्रयेति। ज्ञानस्याप्रत्यक्षत्वे मानान्तरासम्भवेनाश्रयस्य ज्ञानस्यासिद्धेरित्यर्थः। ज्ञानस्य प्रत्यक्षतया स्वरूपासिद्धेश्चेति भावः। अज्ञाते घटादिव्यवहारो न स्यात्, तस्य व्यवहर्त्तव्यज्ञानसाध्यत्वादिति कार्य्येण कारणानुमानात् सिद्ध आश्रय इत्याह। व्यवहारेति। ज्ञानहेतुत्वेनाभिमतादेवावश्यकाद्व्यवहारोपपत्तौ न तेन ज्ञानानुमानमित्याह। ज्ञानेति। ज्ञानहेतुसद्भावेऽपि व्यवहाराभावान्न तेनान्यथासिद्धिरित्याह। तस्येति। ज्ञानहेतुसद्भावे सुषुप्तौ कुतो ज्ञानमेव न जायते? तावन्मात्रस्याहेतुत्वादिति यदि,

---

* नाधारत्वादिति,—इति पा०।

ज्ञानस्वीकारेऽपि तुल्यत्वात्। स्मरणान्यथाऽनुपपत्त्येति चेत्। न। तस्याप्यसिद्धेः। अस्ति तावद्व्यवहारनिमित्तं किञ्चिदिति चेत्। किमतः? न ह्येतावता ज्ञानं तदिति सिध्यति, तस्यैवासिद्धेः। तथापि नियतस्य कर्त्तुः प्रवृत्तेः कर्त्तृधर्म्मेणैव केनचित् प्रवृत्तिहेतुना भवितव्यमिति चेत्। अस्त्विच्छा प्रत्यक्षसिद्धा, न तु ज्ञानम्। सैव कथं नियताधिकरणे उत्पद्यतामिति* चेत्। न। ज्ञाना-

---

तदा या ज्ञानसामग्री सा व्यवहारसामग्र्यस्तु किमान्तरालिकेन ज्ञानेनेत्याह। तावन्मात्रस्येति। अन्यथेति। ज्ञानमेव तदा किं न स्यादित्यर्थः। तस्यापीति। स्मरणस्यापि ज्ञानत्वेनातीन्द्रियत्वादसिद्धि-रित्यर्थः। (१)अत्राप्यनुभवकारणादेव स्मरणोत्पत्तिरित्यन्यथासिद्धि-रिति भावः। तदिति। व्यवहारनिमित्तमित्यर्थः। तस्यैवेति। ज्ञाना-सिद्धा व्यवहारे तज्जन्यत्वानिश्चयादित्यर्थः। कर्त्तृधर्मप्रवृत्तेः† कर्त्तृधर्म-कार्य्यत्वात् कर्त्तृधर्मतया ज्ञानं सिध्येदित्याह। तथापीति। इच्छा-

---

* नियताधिकरणोत्पद्यतामिति,—इति श्री० का०।

† कर्त्तृप्रवृत्तेः, इति सो०।

---

(१) अस्तु वा स्मरणं, तथापि तदन्यथाऽनुपपत्त्या नानुभवसिद्धिः, तत्का-रणेनान्यथासिद्धेरित्याह अत्रापीति।

भ्युपगमेऽपि तुल्यत्वात्। स्वहेतोः कुतश्चिदिति चेत्। तत एव इच्छाऽस्तु, किं ज्ञानकल्पनयेति।

स्यादेतत्। प्रकाशमाने खल्वर्थे तदुपादित्सादिरुपजायते, न तु सुषुप्त्यवस्थायामप्रकाशमानेऽप्यर्थे इत्यनुभवसिद्धम्। तत इच्छायाः कारणं विलक्षणमेव किञ्चित् परिकल्पनीयं; यस्मिन् सति सुषुप्तापलक्षणमौदासीन्यमर्थविषयमात्मनो निवर्त्तते इति चेत्। हन्तैवं सुषुप्तनिवृत्तिमनुभवसिद्धां प्रतिजानानेन ज्ञानमेवापरोक्षमिष्यते। अचेतयन्नेव हि सुषुप्त इत्युच्यते, अचैतन्यनिवृत्तिरेव हि चैतन्यं* ज्ञानमिति। तथाच कालात्य-

स्वविषयविषयकात्मधर्मजन्या नियतविषयकधर्मत्वात् प्रयत्नवदित्यभिप्रेत्याह। सैवेति। अनुमानं ज्ञानएवानैकान्तिकमित्यभिप्रेत्याह। ज्ञानेति। न च ज्ञानहेतोरननुगमात् व्यभिचारेण कारणत्वासम्भवः, (१)परेषामेकशक्तिमत्त्वेनापि कारणत्वग्रहसम्भवादिति भावः। अनुभवसिद्धमिति। यद्यप्येकचात्मन्येकदा आशुतरविनाशिगुणद्वयानवस्थानादिच्छाज्ञानयोः पौर्व्वापर्य्यानुभवो न सम्भवति, (२)तथापि

* चेतना,—इति पा०।

(१) परेषामिति तथाच तन्मते ज्ञानहेतुना तदन्यथासिद्धिः स्यादेवेति भावः।

(२) तथापीति अत्र व्यतिरेकपदं प्रागभावपरम्। अन्यथा ज्ञाननाशेऽपीच्छासत्त्वान्नियमभङ्गापत्तेः।

यापदिष्टो हेतुः। एतेन क्षणिकत्वादिति निरस्तम्। अपि च। किमिदं क्षणिकत्वं नाम? यद्यानुत्तरविनाशित्वं, तदा अनैकान्तिकम्। अथैकक्षणावस्थायित्वं, तदसिद्धं प्रमाणाभावात्।

ननु स्थायिविज्ञानं यादृशमर्थक्षणं गृह्णदुत्पद्यते; द्वितीयेऽपि क्षणे किं तादृशमेव गृह्णाति, अन्यादृशं वा, न वा कमपीति। न प्रथमः, तस्य क्षणस्यातीतत्वात्। प्रत्यक्षज्ञानस्य च वर्त्तमानाभत्वात्*। न चातीतमेव वर्त्तमानाभतयोल्लिखति†, भ्रान्तत्वप्रसङ्गात्। न द्विती-

---

ज्ञानव्यतिरेकाव्यवहितोत्तरकाले इच्छाव्यतिरेकनियमात् कार्य्यकारणभावग्रह इति भावः। एतेनेति। कालात्ययापदेशेनेत्यर्थः। तदाऽनैकान्तिकमिति। इच्छादावित्यर्थः। यादृशं, वर्त्तमानक्षणावच्छिन्नम्। अन्यादृशं, द्वितीयक्षणावच्छिन्नम्। तस्येति। द्वितीये क्षणे इत्यनुषज्यते। वर्त्तमानाभत्वादिति। वर्त्तमानविषयत्वादित्यर्थः। विरम्येति। ज्ञानं हि यं विषयीकृत्योत्पन्नं, न तं

---

* वर्त्तमानभासत्वात्,—इति क्रो०।

† वर्त्तमानतयैवोल्लिखति,—इति क्रो०। वर्त्तमानतयोल्लिखति,—इति का०।

यः, विरम्य व्यापारायोगात्। प्रथमतोऽपि तथाऽभ्युपगमेऽनागतावेक्षणप्रसङ्गात्। न तृतीयः, ज्ञानत्वहानेरिति सद्यावृत्तीयाः।

तदसत्। ज्ञानं गृह्णातीत्यस्यैवार्थस्यानभ्युपगमात्। अपि तु तदेव ग्रहणमित्यभ्युपगमः। तथाच ज्ञानं प्रथमे क्षणे यमर्थमालम्ब्य जातं, द्वितीयेऽपि क्षणे तदालम्बनमेव तन्न वेति प्रश्नार्थः। तच्च तदालम्बनमेव तदिति परमार्थः। न चैवं भ्रान्तत्वं, विपरीतानवगाहनात्। तथापि ज्ञेयनिवृत्तौ कथं ज्ञानानुवृत्तिः, तदनुवृत्तौ वा कथं ज्ञेयनिवृत्तिरिति चेत्। किमस्मिन्ननुपपन्नम्। न हि ज्ञानमर्थश्चेत्येकं तत्त्वमेकायुष्कं वेति।

---

जहाति नान्यं वा विषयीकरोतीति ज्ञानस्वभावादित्यर्थः। न च प्रथमतएव तद्विषयीकरणे हेतुरस्ति, भावित्वेनार्थस्य तदानीमवर्त्तमानत्वादित्याह। प्रथमतोऽपीति। द्वितीयक्षणे पूर्व्वक्षणविषयीभूतस्यार्थस्य [१]वर्त्तमानता भासते, तथाच [२]तत्क्षणनाशेऽपि तथाविधमर्थं विषयीकुर्वत् ज्ञानमभ्रान्तमेवोत्तरक्षणेऽवतिष्ठते इति

---

(१) वर्त्तमानतेति प्रथमक्षणावच्छिन्नता भासते इत्यर्थः।

(२) तत्क्षणेति प्रथमक्षणनाशेऽपीत्यर्थः। तथाविधं, प्रथमक्षणावच्छिन्नमित्यर्थः। पाकरक्ते श्यामोऽयमितिवदिति भावः।

सत्यपि वा क्षणिकत्वे कथमप्रत्यक्षम्? इत्थं; यथोच्यते। न स्वप्रकाशं, वस्तुत्वादितरवस्तुवत्। न च ज्ञानान्तरग्राह्यं, ज्ञानयौगपद्यनिषेधेन समानकालस्य तस्याभावात्। ग्राहककाले ग्राह्यस्यातीतत्वेन वर्त्तमानाभत्वानुपपत्तेः, ग्राह्यकाले च ग्राहकस्यानागतत्वादिति चेत्। नन्वेवं ज्ञाततापि न प्रत्यक्षा स्यात्, क्षणिकत्वात्। कथम्? इत्थम्। न स्वप्रकाशा, वस्तुत्वात्। न जनकग्राह्या, अनागतत्वात्। विरम्य व्यापारायोगाच्च। न समसमयज्ञानग्राह्या, ज्ञानजनकेन्द्रियसम्बन्धाननुभ-

---

नोक्तदोष इत्याह। तच्चेति। किमस्मिन्निति। ज्ञानार्थयोर्यौगपद्ये इत्यर्थः। स्वप्रकाशमिति। (१)स्वप्रकाशत्वाप्रसिद्धावपि इदं घटज्ञानं नैतस्य विषयः ज्ञानत्वादित्यर्थः। ग्राहकेति। ग्राहकज्ञानकाले ग्राह्यं ज्ञानं नास्ति, ग्राह्यज्ञानकाले च तद्ग्राहकं ज्ञानमनागतमित्यर्थः। ज्ञातताजनकं यत् ज्ञानं तदेव न तद्ग्राहकं, तत्काले ज्ञाततायाः अनागतत्वेन वर्त्तमानत्वाभावादित्याह। न जनकेति। ननु ज्ञातताजनकमेव ज्ञानं ज्ञाततां जनयित्वा तां ग्रहीष्यतीत्यत आह। विरम्येति। ज्ञानजनकेति। ज्ञाततासमकालोत्पन्नज्ञानेन न तद्ग्रहः, ज्ञातताजननोत्तरकाले तदिन्द्रियसम्बन्धस्य

---

(१) स्वप्रकाशत्वासिद्धाविति सिद्धौ वा तच्चैवानैकान्तिकमिति भावः।

वात्। न च तदुत्तरज्ञानग्राह्या, तदानीमतीतत्वादिति। क्षणिकत्वमेव तस्याः कुत इति चेत्। त्वदुक्तयुक्तेरेव।

तथाहि। यं क्षणमाश्रित्य जाता; ततः परमपि तमेवाश्रयते, अन्यं वा, न वा कमपीति। तत्र न प्रथमः, तस्य तदानीमसत्त्वात्। न द्वितीयः, अप्रतिसंक्रमात्। एकक्षणावगाहिनि च ज्ञाने तदन्यक्षणाश्रयज्ञातताफलत्वेन भ्रान्तत्वप्रसङ्गात्। रजतावगाहिनि पुरोवर्त्तिशुक्तिज्ञातताफलइव। न चान्यमपि क्षणं ज्ञानमव-

---

प्राह्या तत्समकालं तदभावादित्यर्थः। अनुभवेति। भ्रू प्राप्ताविति तस्य रूपम्। अप्रतिसंक्रमादाश्रयान्तरागमनादित्यर्थः। एकक्षणेति। (१)अन्यविषयकज्ञानेनान्यत्र ज्ञातताजनने जनकज्ञानं भ्रमः स्यादित्यर्थः। ननु क्षणान्तरमपि ज्ञातताजनकज्ञानस्य स्वतन्त्रोविषय इति न तद्भ्रम इत्यत आह। न चेति। पूर्वक्षणे तदुत्तरक्षणस्यावर्त्तमान-

---

(१) अन्यविषयकेति न च रजतज्ञानस्यापि शुक्तिविषयत्वान्नान्यविषयकत्वमिति वाच्यम्। परमतेऽन्यथाख्यात्यनभ्युपगमेनातथात्वात्। तथाच शुक्त्यविषयकरजतस्मरणस्य शुक्तिनिष्ठज्ञातताजनकतया यथा भ्रान्तत्वं, तथा प्रकृतेऽपि स्यादिति भावः। न च ज्ञानस्य स्वविषयज्ञातताजननेऽतिप्रसङ्ग इति वाच्यम्। भेदाग्रहादेर्नियामकत्वादन्यथा व्यवहारजननेऽपि तदापत्तेरित्याशयः।

गाहते, तदानीं तस्यासत्त्वात्। न तृतीयः, निःस्व-
भावताप्रसङ्गात्। न ह्यसौ तदानीं तदीया अन्यदीया
वेति। अतीतेनापि तेनैव क्षणेनोपलक्षिताऽनुवर्त्तते
इति चेत्। एवन्तर्हि वर्त्तमानार्थता प्रकाशस्य न
स्यात्। अन्यथा ज्ञानस्यापि तथाऽनुवृत्तेः को दोषः।

---

त्वादित्यर्थः। एवन्तर्हीति। विषयवर्त्तमानतया ज्ञानस्य वर्त्तमाना-
र्थता, [१]सा च ज्ञानस्यातीतक्षणोपलक्षितविषयतायां न स्यादित्यर्थः।
तथेति। अतीतेनापि क्षणेनोपलक्षितस्य वर्त्तमानार्थतयाऽनुवृत्ते-

---

(१) सा च ज्ञानस्येति यद्यपि ज्ञानस्यातीतक्षणोपलक्षितविषयता न पूर्व्वपक्षिता, किन्तु ज्ञाततायाः अतीतज्ञानोपलक्षितायाः क्षणान्तरेऽनुवृत्तिः, तत्र च ज्ञानस्य वर्त्तमानार्थता न स्यादित्युत्तरमसङ्गतम्; तथापि ज्ञानस्य ज्ञाततागोचरस्यातीतक्षणोपलक्षितज्ञातताविषयतायां वर्त्तमानार्थता न स्यादित्यर्थो बोध्यः। न चातीतक्षणस्योपलक्षणत्वमेव ज्ञाततायाश्च वर्त्तमानत्वमेवेति कथं वर्त्तमानार्थता, तज्ज्ञानस्य स्यादिति वाच्यम्। निराश्रयज्ञाततया ज्ञानगोचरत्वे ज्ञाततायामुपलक्षणस्यापि क्षणस्य ज्ञाने विशेषणत्वाभ्युपगमात्। वस्तुतो वर्त्तमानार्थता वर्त्तमानाश्रयता प्रकाशस्य ज्ञाततया न स्यादिति मूलार्थः प्रतिभाति। अतएवान्यथा ज्ञानस्यापीति फक्किका सङ्गच्छते। न हीत्यादिफक्किकायामपि प्रकाशपदं ज्ञाततापरमेवान्यथा तद्वैयर्थ्यापत्तेः। प्रकाशेनाश्रीयत इत्यग्रिमफक्किकायामपि तथैवेति तदनुसारेण सर्व्वं योज्यमिति युक्तमुत्पश्यामः।

न हि वर्त्तमानार्थप्रकाशसम्बन्धमन्तरेण ज्ञानस्यान्या वर्त्तमानावभासता नाम। अर्थनिरपेक्षप्रकाशनानुवृत्तिमात्रेण तथात्वे भूतभाविविषयस्यापि ज्ञानस्य तथाभावप्रसङ्गात्। अथ मा भूदयं दोष इति स्थूलएव वर्त्तमानः प्रकाशेनाश्रीयते इत्यभ्युपगमः, तदा तज्ज्ञानस्यापि सएव विषय इति तस्यापि न क्षणिकत्वमिति।

---

रित्यर्थः। ननु ज्ञाततापक्षे अर्थनिरपेक्षवर्त्तमानज्ञाततासम्बन्धमात्रेणैव [1]तज्जनकज्ञानस्य वर्त्तमानाभताऽर्थात्ययेऽप्युपपद्यते, त्वन्मयेऽर्थस्यातीतत्वात् ज्ञाततायास्त्वभावात् सा नोपपद्येतेत्यत आह। न हीति। विषयवर्त्तमानतया वर्त्तमानाभता ज्ञानस्य न स्ववर्त्तमानतया। [2]ज्ञाततायाश्च क्षणिकत्वेन तज्ज्ञानकाले नाप्यन्यार्थविषयवर्त्तमानता। [3]तथात्वे वा अतीतादिविषयकमपि ज्ञानं वर्त्तमानाभं स्यात्। [4]एवञ्चाग्रिमक्षणे अतीतज्ञातताविषयकं ज्ञानं न वर्त्तमानाभं

---

(१) तज्जनकेति तद्विषयज्ञानस्येत्यर्थः। तेन नोत्तरविरोधः।

(२) ननूक्तं वर्त्तमानज्ञाततासम्बन्धमात्रेणैव वर्त्तमानाभत्वमित्यत आह ज्ञाततायाश्चेति। यदि च स्थूलकालाश्रयत्वान्न तस्याः क्षणिकत्वं, तदा ज्ञानस्यापि न स्यादित्याकरएव स्फुटम्।

(३) तथात्वे वेति यदि स्ववर्त्तमानतया वर्त्तमानाभत्वमित्यर्थः।

(४) एवञ्चेति वर्त्तमानज्ञाततासम्बन्धस्यापि तदानीमभावादिति भावः।

ननु ज्ञानमैन्द्रियकं चेत् विषयसञ्चारो न स्यात्, संजातसम्बन्धत्वात् । न च जिज्ञासानियमान्नियमः, तस्याः संशयपूर्व्वकत्वात् । तस्य च धर्म्मिज्ञानपूर्व्वकत्वात् । धर्म्मिणश्च सन्निधिमात्रेण ज्ञाने जिज्ञासाऽपेक्षणे वा उभयथाऽप्यनवस्थानादिति । तन्न । ज्ञाततापक्षेऽपि तुल्यत्वात् । तस्या अपि हि ज्ञेयत्वे तत्परम्पराज्ञानापातात् जिज्ञासानियमस्य च तद्वदनुपपत्तेः* ।

---

स्यादित्यर्थः । ननु यदि ज्ञानं मानसं स्यात्तदा विषयान्तरग्रहो न स्यात्, संयुक्तसमवायरूपाया मनःप्रत्यासत्तेः सदा सत्त्वेन ज्ञानपरम्पराया एव ज्ञेयत्वादित्याह । नन्विति । ननु ज्ञानं योग्यं मनःप्रत्यासन्नमपि जिज्ञासाज्ञेयमिति तन्नियमान्नोक्तदोष इत्यत आह । न चेति । सामान्यतो ज्ञाते विशेषतश्चाज्ञाते जिज्ञासा जायते इति सामान्यतो ज्ञानानुभवो वाच्यः । तत्रापि यदि जिज्ञासानैरपेक्ष्येण सन्निकर्षमात्राद्ग्रहः, तदाऽस्य सदातनत्वाद् ग्रहणपरम्पराया अविच्छेदादनवस्था । अथ तद्ग्रहेऽपि सा नियामिका, तदा तस्या अपि सामान्यतो ज्ञानार्थं जिज्ञासा वाच्या, साऽपि सामान्यज्ञानपूर्विका, तदपि जिज्ञासाऽधीनजन्मेति पूर्वपूर्वज्ञानापेक्षायामनवस्थेत्युभयथाऽनवस्थाऽर्थः । अथ किञ्चिज्ज्ञानमजिज्ञासितं ज्ञायते किञ्चिज्जि-

---

* तदनुपपत्तेः,—इति आ॰ क्री॰ ।

न चेन्द्रियसम्बन्धविच्छेदाद्विराम इति युक्तम्, आत्मप्राकट्याव्यापनात्। स्वभावतएव काचिद्सावजिज्ञासिताऽपि ज्ञायते, न तु सर्वेति चेत्तुल्यम्। प्रागुत्पन्नज्ञाततास्मरणजनितजिज्ञासः समुन्मीलितनयनः सञ्ज्ञातज्ञानसमुत्पादितप्राकट्यं जिज्ञासुरेव प्रतिपद्यते इत्यतोनानवस्थेति चेत्। तुल्यमेतत्।

ननु ज्ञानं न सविकल्पकग्राह्यं; तस्य निर्विकल्पकपूर्वकत्वात्, निर्विकल्पकगृहीतस्य तावत्कालानवस्थानात्, तस्य तेनैव विनाशात्। नापि केवलनिर्वि-

---

ज्ञापितं किञ्चिन्न ज्ञायतएवेत्यनियमान्नोक्तदोष इत्यभिप्रेत्य समाधातुं प्रतिबन्धिमुखेनाह। ज्ञाततापक्षेऽपीति। ननु चक्षुरादिना सम्बन्धविच्छेदात् ज्ञाततायहविच्छेदः स्यादित्यत आह। न चेति। वाह्ये तथा सम्भवेऽप्यात्मज्ञाततायां मनःसम्बन्धविच्छेदो न सम्भवतीत्यर्थः। तुल्यमिति। ज्ञानमपि (१)किञ्चिदुद्भवत्वाभावात्तद्ग्राहकात्ममनःसंयोगविशेषाभावाद्वा न ज्ञायते इत्यर्थः। पूर्वोत्पन्नज्ञाततायाः सामान्यतोग्रहादिदानीन्तन्यपि ज्ञातता ज्ञातैवेति तत्संस्काराधीनज्ञाततासामान्यजिज्ञासायामिन्द्रियसन्निकर्षादिदानीन्तनी ज्ञातता ज्ञायते इत्येवमनवस्थापरीहारो ज्ञानप्रत्यक्षत्वेऽपि तुल्य इति शङ्कोत्तराभ्यामाह। प्रागिति। तावत्कालेति। घटज्ञानस्य तन्नि-

---

(१) उद्भवत्वाभावादिति प्राचीनमते।

कल्पकवेद्यं, तस्य सविकल्पकोन्नेयत्वेन तदभावे प्रमाणाभावात्। न च समवायाभाववन्निर्विकल्पक-निरपेक्षसविकल्पकगोचरत्वं ज्ञानस्येति साम्प्रतम्। तयोर्विशेषणांशस्य प्रागग्रहणादनुमानादिवत्तदुपपत्तेः। प्रकृते तु ज्ञानत्वादेरनुपलब्धेरगृहीतविशेषणायाश्च बुद्धेर्विशेष्यानुपसंक्रमात् कथमेवं स्यात्। न। उत्पन्नमा-त्रस्यैव बाह्यविषयज्ञानस्यालोचनात्। ततस्तत्पुरःसरं

---

र्विकल्पकात् ज्ञानत्वविशिष्टज्ञानकालएव नाशात् विशेष्यनाशे सति तद्विशेष्यकज्ञानत्वविशिष्टज्ञानानुत्पादः स्यात्, प्रत्यक्षविशिष्ट-ज्ञानस्य स्वसमानकालीनविशेष्यकत्वनियमादित्यर्थः। तस्येति। निर्विकल्पकस्यातीन्द्रियत्वाभ्युपगमेन सविकल्पकैकोन्नेयतया तदभावे तत्र मानान्तराभावादित्यर्थः। समवायेति। समवायतदभाववन्नि-त्यर्थः। तयोरिति। समवायाभावयोर्विशेषणयोः सम्बन्धिप्रतियो-गिनोर्ज्ञानानन्तरमेव ज्ञानादिविशिष्टज्ञानसामग्रीनियमेन तथात्वेऽपि ज्ञाने ज्ञानत्वरूपविशेषणस्य पूर्वमज्ञानात् कथं तद्विशिष्टज्ञानमित्यर्थः। तथाच जानामीति वर्त्तमानज्ञानवैशिष्ट्यज्ञानमात्मनि न जायेतेति भावः। अत्र किञ्चिज्ज्ञानं (१)निर्विकल्पकैकवेद्यं किञ्चिन्नावेद्यमेवेत्य-नियम इति नोक्तदोष इत्यभिप्रेत्याह। उत्पन्नेति। व्यवसायना-

---

(१) निर्विकल्पकैकेति तज्जन्यायिमविशिष्टज्ञानस्यैव तत्र मानत्वान्न पूर्व्वदोष इति भावः।

प्रथमतएव तज्जातीयस्य ज्ञानान्तरस्य विकल्पनात्। इन्द्रियसन्निकर्षस्य तदैव विशेषणग्रहणलक्षणसहकारिसम्पत्तेः। व्यक्त्यन्तरसमवेतमपि हि सामान्यं गृहीतं तदैवेत्युपयुज्यते। अन्यथा अनुमानादिविकल्पानाम-

---

प्रथमोत्पन्नज्ञानान्तरे ज्ञानत्वविशिष्टज्ञानं प्रथमतएव जायते। व्यवसायनिष्ठविशेषणस्य ज्ञानत्वस्य निर्विकल्पकेन विषयीकृततया सम्भूतसामग्रीकत्वात्। तन्निष्ठतया विशेषणज्ञानस्य गौरवेणाप्रयोजकत्वात्। नन्वन्यव्यक्तिसमवेतत्वेन विशेषणज्ञानं न विशिष्टज्ञानजनकं, घटान्तरवृत्तित्वेन गुणक्रियादीनां विशेषणानां ज्ञानेऽपि घटान्तरे तद्विशिष्टज्ञानानुत्पादात्, चाक्षुषव्यक्तिवृत्तितया च तस्य प्रकृतेऽसम्भवात्, तदुत्पादानन्तरं चाक्षुषज्ञानव्यक्तिनाशात् प्रत्यक्षानुपपत्तेरित्यत आह। व्यक्त्यन्तरेति। व्यक्त्यन्तरवृत्तित्वेनापि ज्ञानत्वस्य ज्ञानं तज्जातीयव्यक्त्यन्तरेषु विशिष्टज्ञानं जनयति, विशेषणस्य ज्ञानत्वस्याभेदात्। यथा पर्वतोऽग्निमानित्यनुमितिमन्यव्यक्तिनिष्ठतया वह्निमत्त्वस्य विशेषणस्य ज्ञानं जनयति। वह्नेर्भेदेऽपि वह्निमत्त्वस्योपाधेर्विशेषणस्याभेदात्। अन्यथा अनुमित्युच्छेद इत्यर्थः।

ननु ज्ञानान्तरस्य निर्विकल्पकाविषयस्य सविकल्पकवेद्यस्योत्पत्तौ हेत्वभावः,[१] अनुमिनोमीत्यनुव्यवसाये तदसम्भवश्च, सामग्र्यभावात्।

---

(१) ननु सामग्रीबलात्प्रत्यक्षं सम्भवत्येवेत्यत आह अनुमिनोमीति। क्वचित् प्रत्यक्षस्य सम्भवेऽपि तत्रानुमितित्वस्य बाधादनुमित्यन्तरस्य सिद्धसाधनेनानुत्पादात्तत्रासम्भवएवेत्यर्थः।

अन्वयव्यतिरेकसिद्धत्वात्। न द्वितीयः, परमाखदृष्टाद्यधिष्ठातृत्वसिद्धौ ज्ञानादीनां सर्वविषयत्वे वेमाद्यधिष्ठानस्यापि न्यायप्राप्तत्वात्। न तु तदधिष्ठानार्थमेवेश्वरसिद्धिः।

---

देरपि द्विकर्तृकत्वापत्तौ *पुनर्घटवत् चितिः चितिवद्घट इतीश्वरानन्त्यं स्यादित्यर्थः। अन्वयेति। कुविन्दव्यापारस्यान्वयव्यतिरेकादित्यर्थः। ईश्वरज्ञानादीनां नित्यत्वेन सर्वविषयत्वात् पटाद्युपादानविषयत्वमपीति कथं न तेषां पटादिकारणत्वं, कुविन्दज्ञानादितुल्यत्वादित्याह। परमाण्विति। (१)पटाकाशसंयोगादिकं प्रति ईश्वरस्य कर्तृत्वात् पटादिगोचरमपि ज्ञानं सिद्धमिति भावः। न त्विति। न त्वधिष्ठिताधिष्ठानार्थमेवेत्यर्थः। यथा कुविन्दाधिष्ठानमन्वयव्यतिरेकाभ्यां तथेश्वरस्याधिष्ठानं, ज्ञानादीनां नित्यतया सर्वविषयत्वात्। तदद्धिष्ठानन्तरकल्पनायां न मानमस्ति,

---

* तस्यापि पक्षधर्मतावलात् सर्व्वज्ञेन सर्व्वस्याधिष्ठातृसिद्धौ पुनर्घटादिदृष्टान्तेन चित्यादौ कर्तृत्रयं स्यादिति,—इत्यधिकमत्र पठ्यते सो॰ पुस्तके।

---

(१) ननु सर्व्वविषयत्वमेव तस्यासिद्धमिति पटादिविषयत्वासिद्धेस्तदुपादानाधिष्ठानं न स्यादित्यतश्चाह पटाकाशेति। वस्तुतो नियतविषयता कारणाधीनेति नित्यतयैव सर्व्वविषयत्वमिति भावः। तदिदमाह नित्यतयेति।

न तृतीयः, तस्मिन् प्रमाणाभावात्। तथाप्येकाधिष्ठितमपरः किमर्थमधितिष्ठतीति प्रश्ने किमुत्तरमिति चेत्। हेतुप्रश्नोऽयं, प्रयोजनप्रश्नो वा? नाद्यः, ईश्वराधिष्ठानस्य नित्यत्वात्। कुविन्दाद्यधिष्ठानस्य स्वहेत्वधीनत्वात्। न द्वितीयः, कार्य्यनिष्पादनेन भोगसिद्धेः स्पष्टत्वात्।

एकाधिष्ठानेनैव कार्य्यं स्यादिति चेत्। स्यादेव, तथापि न सम्भेदेऽन्यतरवैयर्थ्यम्। परिमाणं प्रति सङ्ख्यापरिमाणप्रचयवत् प्रत्येकं सामर्थ्योपलब्धौ सम्भूयकारित्वोपपत्तेः।

अस्ति तत्र वैजात्यमिति चेत्। इहापि किञ्चिद्भविष्यतीति। न चाकुर्वतः कुलालादेः कायसंक्षोभादिसाध्यो भोगः सिद्ध्येदिति तदर्थमस्य कर्तृत्वमीश्वरोऽनुमन्यते, तदर्थमात्रत्वादैश्वर्य्यस्येति।

यत्त्वनित्यप्रयत्नेत्यादि, भवेदप्येवं यद्यनित्यप्रयत्ननिवृत्तावेव बुद्धिरपि निवर्त्तेत। न त्वेतदस्ति,उदासीनस्य

---

येनानवस्था स्यात्। कार्य्ये हि कर्तृत्वेन कारणता, न द्विकर्तृत्वादिनेति न तत्सिद्धिरित्याह। प्रमाणाभावादिति। वैजात्यमिति। प्रत्येकअन्यव्यावृत्तं कारणमेलकव्यङ्ग्यमित्यर्थः। इहापीति। द्विकर्तृके घटादावेककर्तृकचित्यादेर्वैजात्यमित्यर्थः। उदा-

प्रयत्नाभावेऽपि बुद्धिसद्भावात् । हेतुभूता बुद्धिर्निवर्त्तते इति चेत् । न । उदासीनबुद्धेरपि संस्कारं प्रति हेतुत्वात् । कारकविषया बुद्धिर्निवर्त्तते इति चेत् । न । उदासीनस्यापि कारकबोद्धृत्वात् । न हि घटादिकमकुर्वन्तश्चक्रादिकं नेक्षामहे । हेतुभूता कारकबुद्धिर्निवर्त्तते इति चेत् । न । अयतमानस्यापि दुःखहेतुभूताया अपि तद्धेतुकण्टकस्पर्शबुद्धेरभावात् । चिकीर्षाहेतुभूतोऽनुभवो निवर्त्तते इति चेत् । न । केनचिन्निमित्तेनाकुर्वतोऽपि चिकीर्षातद्धेतुबुद्धिसम्भवात् । अनपेक्ष्यकृतिहेतुचिकीर्षाकारणं बुद्धिर्निवर्त्तते इति चेत् । न तर्हि बुद्धिमात्रम् । तथाचानित्यप्रयत्नहेतुकत्वप्रयुक्तं

---

सीनस्येति । [१]कारणान्यव्यापारयत इत्यर्थः । [२]उदासीनबुद्धेरिति कर्मधारयः । दुःखहेत्विति । [३]दुःखहेतुश्चासौ कण्टकस्पर्शश्चेति विग्रहः । तस्य बुद्धेरित्यर्थः ।

---

(१) ननूदासीनो निःप्रयत्न इत्यनर्थान्तरम् । तथाच प्रयत्नाभावेऽपीति व्यर्थमत आह कारणानीति ।

(२) प्रयत्नाभावस्याभार्थमाह उदासीनबुद्धेरिति । पूर्व्वोक्तव्याख्यानेन तद्लाभेऽपि प्रयत्नाजनकबुद्धेरिति कर्म्मधारयात्तदर्थपर्य्यवसाने तल्लाभ इत्यर्थः ।

(३) पौनरुक्त्यभ्रमं निवारयति दुःखहेतुश्चेति । एतच्च कारकत्वद्योतनार्थम् ।

विशिष्टप्रयत्नचिकीर्षाहेतुबुद्धिमत्पूर्वकत्वमिति तन्निवृत्तौ तदेव निवर्त्ततां, न तु बुद्धिमत्पूर्वकत्वमात्रम्। तत्र तस्याप्रयोजकत्वादिति बुद्धिमत्पूर्वकत्व*साध्यपक्षे परीहारः। सकर्तृकमिति प्रयत्नप्रधानपक्षे शङ्कैव नास्ति, तस्यैव तत्रानुपाधित्वात्।

एतेन शरीरसम्बन्धे बुद्धिगतकार्य्यत्ववत् बुद्धिसम्बन्धे प्रयत्नगतकार्य्यत्वमुपाधिरिति निरस्तम्। यो हि बुद्ध्या शरीरवच्छरीरनिवृत्त्या बुद्धिनिवृत्तिवद्वा प्रयत्नेन बुद्धिं

तत्रेति। बुद्धिमत्पूर्वकत्वे साध्ये। तस्य, अनित्यप्रयत्नस्य। प्रयोजकत्वे वौदासीनबुद्धेर्निवृत्तिप्रसङ्ग इति भावः। तदनेन प्रबन्धेन यो बुद्धिमत्पूर्वकमिति साध्यं प्रतिजानीते, तदनुकूलतया परिहृतम्। (१)यदा तु सकर्तृकमिति प्रधानीभूतकृतिविषयाप्रधानीभूतबुद्धिमत्पूर्वकत्वं प्रतिज्ञायते, तदानीमनित्यप्रयत्नस्योपाधित्वशङ्काऽपि नास्तीत्याह। बुद्धिमदिति। ननु प्रधा-

* पूर्व्वकत्वमिति,—इति श्री० का०।

(१) यदा त्विति यदि कृतिजन्यत्वमेव साध्यमित्यर्थः। एवञ्च बुद्धिमत्पूर्व्वकत्वस्याप्राधान्यमनुपादानमेवेति बोध्यम्। यद्यपि विशिष्टाविशिष्टभेदादुपाधित्वं सम्भवति, तथापि व्याप्यं व्यापककोटावनिवेश्यत एव व्याप्तिग्राहकत्वमिति मते साध्यव्यापकत्वाग्रहादुपाधित्वमिति भावः। वस्तुतो हेतौ विपक्षबाधकसम्भवादत्र च तदभावान्न तथात्वमिति।

बुद्धिनिवृत्त्या प्रयत्ननिवृत्तिं साधयेत्, स एवं कदाचि-
दुपालभ्यः । वयन्त्ववगतहेतुभावं कलितसकलशक्तिका-
रकप्रयोक्तारं कार्य्यादेवानुमिमानानैवमास्कन्दनीयाः ।
तच्च तस्यानुपाधित्वात् । न च प्रयत्न आत्मलाभार्थमेव
मतिमपेक्षते, विषयलाभार्थमप्यपेक्षणात् । ततः प्रय-

---

नीभूतकृतिपूर्वकत्वसाध्यपक्षे बुद्धिरप्रधानीभूता कुतः सिध्येत् ? न हि यत्नात्तत्सिद्धिः, शरीरसम्बन्धे ज्ञानगतकार्यत्ववद्बुद्धिसम्बन्धेऽपि प्रयत्नगतकार्यत्वस्योपाधेः सुवचत्वात् । तथा च कृतिमात्रशाली कर्त्ता प्राप्त इत्यत आह । एतेनेति । [१]प्रयत्नानित्यत्वस्यानुपाधित्वेनेत्यर्थः । कार्यत्वादेकैकजन्यत्वं सिध्यत् त्रितयजन्यत्वमपि सिध्यति । आर्थस्तु समाजः । अतएव, ज्ञानादित्रयव्यतिरेकाम्न कार्यव्यतिरेकः, किन्त्वेकैकव्यतिरेकादिति व्यर्थविशेषणत्वेन विशिष्टव्यतिरेको न हेतुव्यतिरेकव्याप्य इति न हेतोर्विशिष्टसिद्धिः, साध्याभावव्यापकाभावप्रतियोगिनएव साध्यगमकत्वादित्यपास्तम् । [२]ज्ञानाद्येकैकजन्यत्वस्यैव साध्यत्वात्, तथैव व्याप्तेरिति भावः ।

तच्चेति । ज्ञानाद्येकैकजन्यत्वे साध्ये इत्यर्थः । तस्य, प्रयत्नगतकार्यत्वस्येत्यर्थः । किञ्च, यदि प्रयत्नेन बुद्धिः स्वोत्पत्त्यर्थमेवापेक्ष्यते,

---

(१) प्रयत्नानित्यत्वस्येति तथा च प्रयत्नादेव बुद्धिसिद्धिरिति भावः । वस्तुतस्तु समूहालम्बनरूपैवानुमितिर्न तु प्रयत्नात्तत्सिद्धिरित्येकदैव त्रितयजन्यत्वं सिद्ध्यतीत्याह कार्य्यत्वादिति ।

(२) ज्ञानाद्येकैकेति प्रत्येकव्याप्तिभिरिति शेषः ।

त्वाद्बुद्धिः तन्निवृत्तेश्च प्रयत्ननिवृत्तिः सिध्यत्येवेति विस्तृमन्यत्र। कार्य्यबुद्धिनिवृत्त्या तु कार्य्यएव प्रयत्नो निवर्त्तते न नित्यः। नित्ये च प्रयत्ने नित्यैव बुद्धिः प्रवर्त्तते नानित्या। न हि तया तस्य विषयलाभसम्भवः। शरीरादेः प्राक् तदसम्भवे देहानुपपत्तौ सर्वानुपपत्तेः*। शरीराजन्यत्ववच्चानित्यप्रयत्नाजन्यत्वमिति संक्षेपः॥

तर्काभासतयाऽन्येषां तर्काशुद्धिरदूषणम्।
अनुकूलस्तु तर्कोऽत्र कार्य्यलोपेविभूषणम्॥३॥

---

तदा प्रयत्नगतकार्यत्वमेवोपाधिः स्यात्। न चैवम्। प्रयत्नस्य निर्विषयत्वेन ज्ञानविषयेषु कार्यजनकमिति तदर्थं बुद्ध्यपेक्षा स्यादेवेत्याह। न च प्रयत्न इति। तथापि नित्या बुद्धिः कुतः सिध्यतीत्याह। नित्ये च प्रयत्ने इति। न हीति। बुद्ध्यनित्यत्वे तद्धेतुशरीरात् प्राक् तदभावे शरीरोत्पत्तिरेव न स्यादिति कदाऽपि सा बुद्धिर्न जायेतेत्यर्थः। अनित्यप्रयत्नाजन्यत्वात् क्षित्यादेरकर्तृकत्वे साध्ये शरीराजन्यत्ववद्व्यर्थविशेषणत्वमित्याह। शरीराजन्यत्ववदिति।

तर्कापरिशुद्धिश्च यदि प्रतिकूलतर्काप्रतीघातः,तदा तेषांयदीश्वरः कर्त्ता स्यात् शरीरी स्यादित्यादीनां तर्काणामीश्वरसिद्ध्यसिद्धिभ्यां व्याघातेनाभासत्वाच्च दूषणत्वमित्याह।तर्काभासतयेति।यथा-

---

* देहानुत्पत्तौ सर्व्वदानुत्पत्तेः,—इति श्री० का०।

कारकव्यापारविगमे हि कार्य्यानुत्पत्तिप्रसङ्गः। चेतनाचेतनव्यापारयोर्हेतुफलभावावधारणात् कारणान्तराभावे इव कर्त्रभावे कार्य्यानुत्पत्तिप्रसङ्गः। कर्त्तुरपि कारणत्वात्।

यत्त्वाह, प्रत्यक्षानुपलम्भाभ्यां तदुत्पत्तिनिश्चयो दृश्ययोरेव न त्वदृश्ययोः। प्रत्यक्षस्यानुपलम्भस्य च तावन्मात्रविधिनिषेधसमर्थत्वात्। धूमाग्निवत्, कम्पमारुतवच्च। न हि धूमः कार्य्योऽनलस्येति उदर्य्यस्यापि, न हि शाखाकम्पो मातरिश्वन इति स्तिमितस्यापि* स्यात्। किन्तु भौमस्पृश्ययोरेव। तथेहापि शरीरवत एव कारणत्वमवगन्तुमुचितं नान्यस्येति।

---

नुकूलतर्काभावरूपा सा? तत्राह। अनुकूलस्त्विति। कर्त्तुः कारणाभावे कार्यं न स्यादित्येवानुकूलस्तर्क इत्यर्थः।

ननु कर्त्रभावेऽपि कारणान्तरव्यापारात् कार्यं स्यादित्यत आह। कारकव्यापारेति। कारकान्तरव्यापारं प्रति चेतनव्यापारस्य हेतुत्वात् कर्त्रभावे सोऽपि न स्यादित्यर्थः। कारणान्तरव्यापारसत्त्वेऽपि कर्त्रभावे कार्यं न स्यात् यत्किञ्चित्कारणाभावस्य कार्य्यानुत्पत्तिव्याप्यत्वादित्याह। कारणान्तरेति।

सौगतमतमाह। यत्त्विति। इतिमात्रकार्यमात्रयोर्नान्वय-

---

* स्तिमितवायोरपि,—इति का०।

तदसत्। प्रत्यक्षानुपलम्भौ हि दृश्यविषयावुपायस्तदुत्पत्तिनिश्चये। न तु दृश्यतैव तत्रोपेया। किन्नाम दृश्याश्रितं सामान्यद्वयम्। तदालीढस्य हि तदुत्पत्तिनिश्चये दृश्यमदृश्यं वा सर्व्वमेव तज्जातीयं तदुत्पत्तिमत्तया निश्चितं भवति। यथा स्पर्शरूपरसगन्धाना* मुत्तरोत्तरनिमित्ततायां तव, अस्माकञ्चातीन्द्रियसमवाय्यादिसिद्धौ†। नचेदेवमुदाहृतयोरेव दहनपवनयोरालोकरूपवतोस्तदुत्पत्तिनिश्चये कथमनालोक-

व्यतिरेकाभ्यां व्याप्तिग्रहः, लभ्यते व्यापककृतेः सत्त्वेनायोग्यकृतेर्व्यतिरेकानिरूपणात्। यदि च कृतिमात्रेण व्याप्तिग्रहाददृश्यकर्तृसिद्धिः, तदा वह्निमात्रव्याप्यधूमाददृश्यजाठर्य्यादिवह्निरपि सिध्येत्। शाखाकम्पे चायोग्यस्यापि(१) स्तिमितवायोः कारणताग्रहश्च स्यादित्यर्थः।

कृतिविशेषकार्यविशेषयोरन्वयव्यतिरेकग्रहो बाधकं विना कृतिमात्रकार्यमात्रयोर्व्याप्तिग्रहोपायः। न तु पक्षधर्मतालभ्यविशेषयोरन्वयादिग्रहः। यथा वह्निधूमविशेषयोरन्वयादिना तत्सामान्ययोरपि व्याप्तिग्रहः, अन्यथाऽनुमानमात्रोच्छेदादित्याह। प्रत्य-

* रूपस्पर्शगन्धाना,—इति का०।

† समवायादिसिद्धौ,—इति का०।

(१) अयोग्यस्यापीति उद्भूतस्पर्शवेगशून्यवायोरित्यर्थः।

निरस्तरूपयोः सिद्धिर्यदुदर्य्यस्तिमितसाधारणी सिद्धिः स्यादिति। तद्भवेदप्येवं यदि शरीरादिकं विना कार्य्यमिव भौमं स्पर्शवद्वेगवन्तञ्च विना अग्निमाचात् पवन-

चानुपलम्भाविति । अन्यथा पाकं प्रत्यालोकात्मकस्यैव[१] वह्नेः कम्पं प्रति रूपवतएव दण्डादेः प्रत्यक्षानुपलम्भाभ्यां कारणत्वनिश्चयादनालोकात्मकजाठर्य्यदहनस्य निरस्तरूपस्य पवनस्य च कथं सिद्धिः स्यादित्याह । न चेदेवमिति । उदाहृतयोः[२] पूर्वोक्तयोरित्यर्थः । दहनपवनयोरनालोकनिरस्तरूपयोः कुतः सिद्धिरालोकरूपवतोरेव तदुत्पत्तिनिश्चये सतीति योजना । आलोकवतएव वह्नेर्धूमोत्पत्तिनिश्चये[३] रूपवतएव हस्तादेर्लोष्टादौ कम्पनिश्चये सती-

(१) आलोकात्मकस्येति आलोकवतइत्यर्थः । तथाच पाकेन जाठर्य्यवह्निः कम्पेन पवनो नानुमीयेतेत्यर्थः ।

(२) पूर्व्वोक्तयोरिति यद्यपि पवनः स्तिमितएव पूर्व्वोक्तः स च न कम्पानुमेयस्तथापि कम्पमारुतवचेत्यनेन कम्पजनकवायोरपि पूर्व्वोक्तत्वमिति भावः । दहनस्तु धूमाग्निवदित्यनेनोक्तो न बोध्यः, किन्तु जाठर्य्यएव उदाहृतस्तस्यएवेति जाठर्य्यलाभाय पूर्व्वोक्तयोरित्यर्थइति व्याख्यातमिति ध्येयम् ।

(३) धूमोत्पत्तिनिश्चयइति पाठे धूमपदेनैव पाक उपलक्षितः । तस्यैव जाठर्य्यवह्निसाधकत्वादुपक्रान्तत्वाच्चेति । तेनापि जाठर्य्यवह्निसिद्धिर्न स्यादित्यर्थः ।

माचाद्वा धूमकम्पौ स्यातां, न त्वेवम्। न चैवं चेतन-व्यभिचारोऽपि* शक्याभिधान इत्यलं बालप्रलापानां समाधानैः।

तदुत्पत्तेरसिद्धावपि तत्तदुपाधिविधूननेन स्वाभाविकत्वस्थितौ यदि कर्त्तारमतिपत्य कार्य्यं स्यात् स्वभावमेवातिपतेदिति कार्य्यविलोपप्रसङ्ग इति। एतच्च सर्व्वमात्मतत्त्वविवेके निपुणतरमुपपादितमिति नेह प्रतन्यते। एवञ्च सिद्धे प्रतिबन्धे न प्रतिबन्ध्यादेः क्षुद्रोपद्रवस्यावकाशः। प्रतिबन्धसिद्धाविष्टापादनात्, तदसिद्धौ तत एव तत्सिद्धेरप्रसङ्गादिति।

---

त्यर्थः। अदृश्यवह्नेर्धूमानुत्पत्तेः (१)पवनमाचाच्च कम्पानुत्पत्तेस्तत्र दृश्यत्वमेव तन्त्रमिति न धूमाददृश्यवह्निसिद्धिर्न वा कम्पात् पवनमाचस्यानुद्भूतस्पर्शस्य सिद्धिरित्याह। न त्विति। कारणत्वसिद्धावपि प्रकारान्तरेण कार्यलोपप्रसङ्गं वक्तुमाह। तदुत्पत्तेरिति। ननूपाधिविधूननमेव कथमित्याह। एतच्चेति। प्रतिबन्ध्यादेरिति। शशे पशुत्वाद्दृश्यशृङ्गबाधेऽप्यदृश्यशृङ्गसिद्धिरित्यादेरित्यर्थः। प्रतिबन्धसिद्धाविति। वस्तुतो विपक्षबाधकाभावाद्व्याप्त्यभाव इत्यर्थः।

---

* चेतनव्यवहारोऽपि,—इति खा०।

---

(१) उष्ममात्राच्चेति यदि पाठस्तदा उष्मपदं वायुपरमेवेति बोध्यम्।

ननु तस्य सर्व्वदा सर्व्वत्राविशेषे कार्य्यस्य सर्वदोत्पत्तिप्रसङ्ग इति निरपेक्षेश्वरपक्षे दोषः, सापेक्षे उपेक्षणीयएवास्त्वितिं* बालस्य प्रदीपकलिकाक्रीडयैव† नगरदाहः। स्थेमभाजोजगतएवाकारणत्वप्रसङ्गात्‡ । ओमिति ब्रुवतः सौगतस्य दत्तमुत्तरं प्राक् ।

आर्षं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः ॥

---

(१)प्रकृतादर्थादर्थान्तरं (२)भङ्गत्वस्य योग्यसंस्थानव्यङ्ग्यत्वेनायोग्यं भङ्गं विरोधात् शङ्कितुमप्यशक्यं, शशे भङ्गस्यात्यन्ताभाव इति सर्वेषामबाधितप्रत्यक्षबाधस्येति भावः। ततएव, प्रतिबन्धासिद्धेरेवेत्यर्थः। अप्रसङ्गः, शशभङ्गादेरित्यर्थः। दत्तमिति। कार्य्यस्याहेतुकत्वे कादाचित्कत्वानुपपत्तिरित्यादिनेत्यर्थः। नन्वागमादेवेश्वरसिद्धौ तच

---

* त्वपेक्षणीयमेवास्त्विति,—इति का०। सापेक्षत्वेऽपेक्षणीयमेवास्त्विति,—इति श्री०।

† बलिप्रदीपकलिकाक्रीडयैव,—इति श्रा०। बालकस्य दीपिकाक्रीडयैव,—इति का०।

‡ अस्मदवलोकितेषु चतुर्षु मूलपुस्तकेषु इत्यमेव पाठः। परन्तु, 'तन्न, स्थेमभाजोजगतएवाकारणत्वप्रसङ्गात्'—इत्येवं पाठो भवितुमुचितः।

---

(१) दोषान्तरमाह प्रकृतादिति।

(२) भङ्गत्वस्येति यद्यपि भङ्गत्वस्य योग्यसंस्थानव्यङ्ग्यत्ववदात्मनोऽपि योग्योपाधिमत्त्वनियमः। यदि च तत्संसारिमात्रविश्रान्तं तदा तदपि

तमिममर्थमागमः संवदति, विसंवदति तु परेषां विचारम्।

विश्वतश्चक्षुरुत विश्वतोमुखो-
विश्वतोबाहुरुत विश्वतः पात्।
सम्बाहुभ्यां धमति सम्पतत्रै-
र्द्यावाभूमी जनयन् देव एकः॥

अत्र प्रथमेन सर्वज्ञत्वं, चक्षुषा दृष्टेरुपलक्षणात्। द्वितीयेन सर्ववक्तृत्वं, मुखेन वागुपलक्षणात्। तृतीयेन सर्वसहकारित्वं, बाहुना सहकारित्वोपलक्षणात्। चतुर्थेन व्यापकत्वं, पदा व्याप्तेरुपलक्षणात्। पञ्चमेन

---

न्यायप्रदर्शनं व्यर्थमित्यत आह। आर्षमिति। तर्कानुसन्धानं विनाऽऽर्षधर्मोपदेशे तात्पर्यमेव निश्चेतुमशक्यमित्यर्थः। [१]यद्वा, आगमाविरोधं न्यायमाह। आर्षमिति। अस्मन्न्याये नागमविरोधो-

---

योग्यपदकृविश्रान्तमिति अयोग्यस्य न बाधः प्रत्यक्षेणापि; तथापि विपक्षबाधकाभावएव मूलम्। अन्यथा पशुत्वस्य केवलान्वयित्वापत्तेः। तस्य च त्वयाऽनभ्युपगमादिति भावः।

(१) नन्वेवमपि तर्कोपदर्शनमात्रमहं न तु न्यायोपदर्शनमित्यत आह यद्वेति। अनेनोभयोः समानविषयत्वप्रतिपादनात् विरोधमाह इत्यर्थः।

धर्म्माधर्म्मलक्षणप्रधानकारणत्वं, तौ हि लोकयात्रावह-नादाहू । पक्षेन परमाणुरूपप्रधानाधिष्ठेयत्वं, ते हि गतिशीलत्वात् पतत्त्रव्यपदेशाः, पतन्तीति । सन्धमति, सञ्जनयन्निति च व्यवहितोपसर्गसम्बन्धः । तेन संयोजयति, समुत्पादयन्नित्यर्थः । द्यावा इत्यूर्द्धसप्तलोकोपलक्षणं, भूमीत्यधस्तात्, एक इत्यनादितेति । स्मृतिरपि,—

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते,—इत्यादि ।

एतेन ब्रह्मादिप्रतिपादका आगमा बोद्धव्याः ।

आयोजनात् खल्वपि ।

स्वातन्त्र्ये जड़ताहानिर्नादृष्टं दृष्टघातकम् ।

---

ऽपि तु तत्संवादः, परोक्तन्याये तु नैवमित्याह । तमिममिति । व्यवहितेति । व्यवहिताश्चेत्यनेन उपसर्गसंज्ञाविधानादिति भावः । एतेन ब्रह्मादीति । ब्रह्मादिशरीरमधिष्ठाय ईश्वरएव जगत् सृजतीत्यर्थः ।

खल्वपीति निपातसमुदायः उदाह्रियते इत्यर्थे वर्त्तते, न समुच्चयार्थः । स, साध्यो विश्वविदव्यय इत्यनेनान्वीयते इत्येके । साध्यते इत्यनुवर्त्तते इत्यन्ये । एवमग्रेऽपि ।

आ युज्यते संयुज्यतेऽन्योन्यं द्रव्यमनेनेत्यायोजनं द्व्यणुकारम्भकसंयोगजनकं सर्गाद्यकालीनपरमाणुकर्मात्र विवक्षितम् । तद्यदि

हेत्वभावे फलाभावो विशेषस्तु विशेषवान् ॥४॥

परमाण्वादयो हि चेतनायोजिताः प्रवर्त्तन्ते अचेतनत्वात् वास्यादिवत्। अन्यथा कारणं विना कार्य्यानुत्पत्तिप्रसङ्गः। अचेतनक्रियायाश्चेतनाधिष्ठानकार्य्यत्वावधारणात्। क्रियाविशेषविश्रान्तोऽयमर्थो न तु तन्मात्रगोचरः, चेष्टा हि चेतनाधिष्ठानमपेक्षते इति चेत्। अथ केयं चेष्टा नाम? यदि प्रयत्नवदात्मसंयोगा-

---

स्वप्रयत्नादेव तेषां स्यात्, तदा परमाणूनामचैतन्यानुपपत्तिरित्याह। स्वातन्त्र्ये इति। यदि च प्रयत्ननिरपेक्षाददृष्टादेव तत् स्यात्, तदा द्व्यणुकादीनामपि ततएवोत्पादः स्यादिति हेत्वन्तरोच्छेद इत्याह। नादृष्टमिति। चेतनव्यापारसहितात्तस्मादिति भावः। तथा च[1] सर्गाद्यकालीनद्व्यणुकोत्पादकं कर्म स्वसमानकालीनप्रयत्नजन्यं कर्मत्वात् चेष्टावदिति मानार्थः। विपक्षे किं बाधकमित्याह। हेत्वभावे इति। हेतोश्चेतनव्यापारस्यान्यत्रोपलब्धस्याभावे क्रियारूपफलाभाव इत्यर्थः। ननु चेष्टारूपः क्रियाविशेषस्तथा, न तु क्रियामात्रमित्यत आह। विशेषस्त्विति। चेष्टा हि भोक्तृगतप्रयत्नस्य प्रयोज्या, न तु प्रयत्नमात्रस्येत्यर्थः।

तर्कोपकार्यं मानमाह। परमाण्वादयो हीति। आयोजिता-

---

(१) मूलोक्तस्य तस्य व्योमादौ व्यभिचारात्तत्रापरितुष्यन् स्वयं तर्कोपकार्य्य मानमाह सर्गाद्यकालीनेति।

समवायिकारणिका क्रिया, प्रयत्नमात्रकारणिकेति वा विवक्षितं; तन्न, तस्यैव तत्रानुपाधित्वात्। अथ हिताहितप्राप्तिपरिहारफलत्वं तत्त्वं; तन्न, विषभक्षणोद्बन्धनाद्यव्यापनात्। इष्टानिष्टप्राप्तिपरिहारफलत्वमिति चेत्। कर्त्तारं प्रत्यन्यं वा? उभयथाऽपि परमाण्वादि-

---

उत्पादितकर्माणः प्रवर्त्तन्ते कार्यमारभन्ते इत्यर्थः । [१]विशेषणीभूतकर्मपक्षत्वे पूर्वदर्शितानुमाने तात्पर्यम् । विशेषस्त्वित्यादिनिराकार्यं चेष्टात्वमुपाधिमाह । क्रियाविशेषेति । तस्यैवेति । प्रयत्नवदात्मसंयोगासमवायिकारणकत्वमेव हि परमाणुक्रियायां चेतनायोजितत्वमिति साध्यं, तच्च नोपाधिः [२]साधनव्यापकत्वादित्यर्थः। विषेति । विषभक्षणादिक्रियाया अहितमरणादिप्रापकत्वादित्यर्थः। इष्टेति । विषभक्षणाद्यनुकूलक्रियाया अपि इच्छाविषयविषभक्षणादिप्रापकत्वमस्त्येव, इच्छां विना तत्र प्रवृत्त्यभावादित्यर्थः । उभयथाऽपीति । परमाण्वादिक्रियायास्तत्कर्त्तुरीश्वरस्यास्मदादेश्चेच्छाविषयार्थहेतुत्वादित्यर्थः । तथा च साधनव्यापकत्वादनुपाधित्वमिति भावः ।

---

(१) अतएवाह विशेषणीभूतेति । अतएव चेष्टात्वस्योपाधित्वशङ्काऽपीति भावः ।

(२) साधनव्यापकत्वादिति न च कर्म्ममात्रस्य तत्प्रयत्नजन्यत्वेऽपि तत्संयोगासमवायिकारणत्वे मानाभाव इति वाच्यम्। यः स्पन्द इत्यादि प्रागुक्तव्याप्तेस्तथात्वादिति भावः ।

क्रियासाधारण्यादविशेषः। भ्रान्तसमीहाया अतथाभूतायाअपि चेतनव्यापारापेक्षणाच्च। शरीरसमवायिक्रियात्वं तदिति चेत्। न। मृतशरीरक्रियाया अपि चेतनपूर्वकत्वप्रसक्तेः। जीवतइति चेत्। न। नेत्रस्पन्दादेश्चेतनाधिष्ठानाभ्युपगमप्रसङ्गात्। स्पर्शवद्-

---

साध्याव्यापकत्वमप्याह। भ्रान्तेति। भ्रमप्रवृत्तस्यन्दस्येष्टरजताप्रापकत्वादनिष्टशुक्तिपरीहारकत्वाच्च तत्र साध्याव्यापकत्वादित्यर्थः। न च रजतत्वेनेच्छाविषयस्य शुक्तेः प्रापकत्वमस्त्येवेति वाच्यम्। येन रूपेणेष्टं ताद्रूप्येण प्राप्तेर्विवक्षितत्वादिति भावः।

मृतेति। (१)वाय्वादिना मृतशरीरक्रियायां साध्याव्याप्तेरित्यर्थः। एतच्च समव्याप्तोपाध्यभिप्रायेण। मृतेत्युपलक्षणं, जीवशरीरस्यापि वायुवशात् क्रियायां तथात्वमिति भावः।

विषमव्याप्तोपाधिपक्षे तु शरीरावयवक्रियायां साध्याव्यापकत्वं मन्तव्यम्। नेत्रेति। (२)इदमपि दूषणं समव्याप्तोपाधिपक्षे। विषम-

---

(१) मृतशरीरे क्रियैव कथमित्यत आह वाय्वादिनेति। वह्निोदनादिनेति भावः।

(२) इदमपीत्युपलक्षणं, त्वन्मतेनेत्यपि द्रष्टव्यम्। मन्मते ततएव साध्यापत्तेरिष्टत्वात् त्वन्मतइति। यद्यपि प्रयत्नं शरीरगर्भोपाधिविशेषणमिति ज्वलन क्रियायां तदभावादव्याप्तिसंभवाभावस्तथापि तदगर्भतायामिदं, तद्गर्भत्वेऽन्योन्याश्रय इति विकल्प्य दूषणे तात्पर्य्यम्।

द्रव्यान्तराप्रयोगे सतीति चेत्। न। ज्वलनपवनादौ तत्राभावाभ्युपगमापत्तेः। शरीरस्य स्पर्शवद्द्रव्यान्तराप्रयुक्तस्येति चेत्। न। चेष्टयैव शरीरस्य लक्ष्यमाणत्वात्। सामान्यविशेषश्चेष्टात्वं, यत उन्नीयते प्रयत्नपूर्व्विकेयं क्रियेति चेत्। न। क्रियामात्रेणैव तदुन्नयनात्। भोक्तृबुद्धिमत्पूर्व्वकत्वं यतइति चेत्। तर्हि तद्विश्रान्तत्वमेव तस्य। न चैतावतैव क्रियामात्रं प्रत्यचेतनमात्रस्य चेतनाधिष्ठानेन व्याप्तिरपसार्य्यते। विशेषस्य विशेषं प्रति प्रयोजकतया सामान्यव्याप्तिं प्रत्यविरोध-

---

व्याप्ते तु करादिक्रियायां साध्याव्यापकम्। स्पर्शवदिति। नेत्रादिस्पन्दनन्तु स्पर्शवद्वायुनोदनजन्यमिति नोक्तदोष इत्यर्थः। ज्वलनेति। लभ्यते ज्वलनादिक्रिया न प्रयत्नजन्या किन्त्वदृष्टवदात्मसंयोगजन्येत्यतः तत्रापि समव्याप्तोपाधिपक्षे साध्यापत्तिरित्यर्थः। चेष्टयैवेति। चेष्टाश्रयः शरीरमिति लक्षणपक्षेऽन्योन्याश्रय इत्यर्थः। लक्षणान्तरे तु करादिक्रियायां साध्याव्याप्तिरिति भावः। सामान्येति। अतो नोक्तदोष इति भावः। तत्र मानमाह। यत इति। क्रियामात्रेणेति। क्रियामात्रस्यैव मया प्रयत्नजन्यत्वानुमापकत्वाङ्गीकारादिति न तेनैव जातिः सिध्यतीत्यर्थः। विशेषस्येति। क्रियाश्रयत्वयोः सामान्यतः कार्य्यकारणभावनिश्चये साध्याव्यापकत्वमावश्यकमिति भावः।

कत्वात् । अन्यथा सर्व्वसामान्यव्याप्तेरुच्छेदादित्युक्तम् । एतेनाशरीरत्वादिना सत्प्रतिपक्षत्वमपास्तम् । अत्राप्यागमसंवादः,—

यदा स देवोजागर्त्ति तदेदं चेष्टते जगत् ।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति ॥
अज्ञोजन्तुरणीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितोगच्छेत् स्वर्गं वा श्वभ्रमेववा ॥
मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च॥ इत्यादि।

अत्र जागरस्वापौ सहकारिलाभालाभौ । ईश्वरप्रेरणायामज्ञत्वमप्रयतमानत्वञ्च हेतू दर्शितौ परमाण्वादिसाधारणौ । स्वर्गश्वभ्रे चेष्टानिष्टोपलक्षणे । एतदेव सर्व्वाधिष्ठानमुत्तरत्र विभाव्यते मयेत्यादिना । न

---

यद्वा, प्रयत्नवदात्मसंयोगजसंयोगएव साध्याव्यापकत्वमिति भावः।

ननु परमाणवो न चेतनाधिष्ठिताः प्रवर्त्तन्ते शरीरेतरत्वादिति सत्प्रतिपक्षता स्यादित्यत आह । एतेनेति । शरीरेतरक्रियायाश्चेष्टात्वाभावाल्लौकिकप्रयत्नजन्यत्वं निवर्त्तते, क्रियामात्रे तु प्रयत्नजन्यत्वं स्यादेवेत्यर्थः । यदा स देवेत्यादिपरकीयविचारे आगमविरोधप्रदर्शनम् । अध्यक्षेण अधिष्ठात्रा, प्रकृतिः परमाणुः। क्षित्यादीति । क्षित्यादिकं प्रयत्नप्रतिबद्धपतनं गुरुत्वे सत्यपा-

| | Rs. | |
|---|---|---|
| Pingala Chhandaḥ Sútra, (Sans.) Fasc. II—III @ /6/ each | 0 | 4 |
| Prithiráj Rásau, (Sans.) Part I, Fasc. I, Part II, Fasc. I—V @ /6/ each | 2 | 1 |
| Ditto (English) Part II Fasc. I .. .. .. | 0 | 12 |
| Prákṛita Lakshaṇam, (Sans.) Fasc. I .. .. .. | 1 | 8 |
| Parásara Smṛiti (Sans.) Vol. I, Fasc. 1—8, Vol. II, Fasc. 1—4, Vol. III. Fasc. I @ /6/ each .. .. .. .. .. | 4 | 14 |
| Paráśara, Institutes of (English) .. .. .. .. | 0 | 12 |
| S'rauta Sútra of A'pastamba, (Sans.) Fasc. I—XII @ /6/ each .. | 4 | 8 |
| Ditto A'śvaláyana, (Sans.) Fasc. I—XI @ /6/ each .. | 4 | 2 |
| Ditto Láṭyáyana (Sans.) Fasc. I—IX @ /6/ each .. | 3 | 6 |
| Ditto S'ánkháyana (Sans.) Vol. I, Fasc. 1—7, Vol. II, Fasc. 1—2, @ /6/ each .. .. .. | 3 | 6 |
| Sáma Veda Saṃhitá, (Sans.) Vols I, Fasc. 3—10; II, 1—6; III, 1—7; IV, 1—6; V, 1—8, @ /6/ each Fasc. .. .. .. | 13 | 2 |
| Saṃkhya Sutra Vritti (Sans.) Fasc. I—IV @ /6/ each .. .. | 1 | 8 |
| Sáhitya Darpaṇa, (English) Fasc. I—IV @ /6/ each .. .. | 1 | 8 |
| Sánkhya Aphorisms of Kapila, (English) Fasc. I and II @ /6/ each .. | 0 | 12 |
| Sarva Darśana Sangraha, (Sans.) Fasc. II .. .. .. | 0 | 6 |
| Sankara Vijaya, (Sans.) Fasc. II and III @ /6/ each .. .. | 0 | 12 |
| Sánkhya Pravachana Bháshya, Fasc. III (English preface only) .. | 0 | 6 |
| S'ṛi Bháshyam, (Sans.) Fasc. I—II @ /6/ each .. .. .. | 0 | 12 |
| Suśruta Saṃhitá, (Eng.) Fasc. I and II @ /12/ each .. .. | 1 | 8 |
| Taittiríya A'raṇya (Sans.) Fasc. I—XI @ /6/ each .. .. | 4 | 2 |
| Ditto Bráhmaṇa (Sans.) Fasc. I—XXIV @ /6/ each .. .. | 9 | 0 |
| Ditto Saṃhitá, (Sans.) Fasc. IX—XXXV @ /6/ each .. .. | 10 | 2 |
| Ditto Prátiśákhya, (Sans.) Fasc. I—III @ /6/ each .. .. | 1 | 2 |
| Ditto and Aitareya Upanishads, (Sans.) Fasc. II and III @ /6/ each | 0 | 12 |
| Táṇḍyá Bráhmaṇa, (Sans.) Fasc. I—XIX @ /6/ each .. .. | 7 | 2 |
| Tattva Chintámaṇi, Vol. I, Fasc. 1—9; Vol. II, 1—5 (Sans.) @ /6/ each | 5 | 4 |
| Tul'sí Sat'saí, (Sans.) Fasc. I—III @ /6/ each .. .. .. | 1 | 2 |
| Uttara Naishadha, (Sans.) Fasc. III, V—XII @ /6/ each .. .. | 3 | 6 |
| Uvásagadasáo, (Sans.) Fasc. I—VI @ /12/ ,, .. .. | 4 | 8 |
| Varáha Puráṇa, (Sans.) Fasc. I—XIII @ /6/ each .. .. | 4 | 4 |
| Váyu Puráṇa, (Sans.) Vol. I, Fasc. I—VI; Vol. II, Fasc. I—VII, @ /6/ each Fasc. .. .. .. .. .. | 4 | 14 |
| Vishṇu Smṛiti, (Sans.) Fasc. I—II @ /6/ each .. .. | 0 | 12 |
| Vivádáratnákara, (Sans.) Fasc. I—VII @ /6/ each .. .. | 2 | 10 |
| Vrihannáradíya Puráṇa, (Sans.) Fasc. I—V @ /6/ .. .. | 1 | 14 |
| Yoga Sútra of Patañjali, (Sans. & English) Fasc. I—V @ /14/ each .. | 4 | 6 |

### *Tibetan Series.*

| | | |
|---|---|---|
| Sher-Phyin—Fasc. 1—5 Vol. II, Fasc. I @ 1/ each .. .. | 6 | 0 |
| *Rtogs brjod dpag bsam hkhri S'iñ* (Tibetan & Sans.) Fasc. I—II @ 1/ .. | 2 | 0 |

### *Arabic and Persian Series.*

| | | |
|---|---|---|
| 'A'lamgírnámah, with Index, (Text) Fasc. I—XIII @ /6/ each .. | 4 | 14 |
| A'ín-i-Akbarí, (Text) Fasc. I—XXII @ 1/ each .. .. | 22 | 0 |
| Ditto (English) Vol. I (Fasc. I—VII) .. .. .. | 12 | 4 |
| Akbarnámah, with Index, (Text) Fasc. I—XXXVII @ 1/ each | 37 | 0 |
| Bádsháhnámah with Index, (Text) Fasc. I—XIX @ /6/ each .. | 7 | 2 |
| Beale s Oriental Biographical Dictionary, pp. 291, 4to., thin paper .. | 4 | 8 |
| Catalogue of Persian books and MSS. in the library of A. S. B., Fasc. I | 1 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. I—XXI @ 1/ each .. .. .. .. .. .. | 21 | 0 |
| Farhang-i-Rashídí (Text), Fasc. I—XIV @ 1/ each .. .. | 14 | 0 |
| Fihrist-i-Ṭúsí, or, Ṭúsy's list of Shy'ah Books, (Text) Fasc. I—IV @ /12/ each .. .. .. .. .. .. | 3 | 0 |
| Futúḥ-ul-Shám Waqidí, (Text) Fasc. I—IX @ /6/ each .. .. | 3 | 6 |
| Ditto Azádí, (Text) Fasc. I—IV @ /6/ each .. .. | 1 | 8 |
| Haft A'smán, History of the Persian Mansawi. (Text) Fasc. I .. | 0 | 12 |
| History of the Caliphs, (English) Fasc. I—VI @ /12/ each .. | 4 | 8 |
| Iqbálnámah-i-Jahángírí, (Text) Fasc. I—III @ /6/ each .. | 1 | 2 |
| Isabáh, with Supplement, (Text) 51 Fasc. @ /12/ each .. .. | 38 | 4 |
| Maásir-ul-Umara, Vol. I, Fasc. 1—9, Vol. II, 1—9 Vol. III, 1—4 @ /6/ each .. .. .. .. .. .. | 8 | 4 |
| Maghází of Wáqidí, (Text) Fasc. I—V @ /6/ each .. .. | 1 | 14 |
| Muntakhab-ul-Tawáríkh, (Text) Fasc. I—XV @ /6/ each .. | 5 | 10 |
| Muntakhab-ul-Tawáríkh (English) Vol. II, Fasc. I—V @ /12/ each .. | 3 | 12 |

(*Turn over.*)

Muntakhab-ul-Lubáb, (Text) Fasc. I—XIX @ /6/ each .. Rs. 7
Mu'ásir-i-'Álamgírí (Text), Fasc. I—VI @ /6/ each .. .. 2
Nokhbat-ul-Fikr, (Text) Fasc. I .. .. .. .. 0
Nizámí's Khiradnámah-i-Iskandarí, (Text) Fasc. I and II @ /12/ each .. 1
Riyazu-s-Salátín, (Text) Fasc. I—II @ /6/ each .. .. 0
Suyúty's Itqán, on the Exegetic Sciences of the Koran, with Supplement, (Text) Fasc. II—IV, VII—X @ 1/ each .. .. .. 7
Tabaqát-i-Náṣirí, (Text) Fasc. I—V @ /6/ each .. .. 1
Ditto (English) Fasc. I—XIV @ /12/ each .. .. 10
Táríkh-i-Fírúz Sháhí of Ziaa-al-dín Barní (Text) Fasc. I—VII @ /6/ each 2
Táríkh-i-Baihaqí, (Text) Fasc. I—IX @ /6/ each .. .. 3
Táríkh-i-Fírozsháhí, of Shams-i-Siráj Afif. (Text) Fasc. I—V @ /6/ each 1
Wís o Rámín, (Text) Fasc. I—V @ /6/ each .. .. .. 1
Zafarnámah, Vol. I, Fasc. I—IX, Vol. II. Fasc. I—VIII @ /6/ each .. 6
Túzak-i-Zehángírí (English) Fasc. I .. .. .. .. 0

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES. Vols. VII, IX to XI; Vols. XIII and XVII, and Vols. XIX and XX @ /10/ each .. Rs. 80
   Ditto Index to Vols. I—XVIII .. .. 5
2. PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl.) @ /4/ per No.; and from 1870 to date @ /6/ per No.
3. JOURNAL of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1850 (7), 1851 (7), 1857 (6), 1858 (5), 1861 (4), 1864 (5), 1865 (8), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6) 1886 (8), 1887 (7). @ 1/ per No. to Subscribers and @ 1/8 per No. to Non-Subscribers,
   *N. B. The figures enclosed in brackets give the number of Nos. in each Volume.*
4. Centenary Review of the Researches of the Society from 1784—1883 .. 3
   General Cunningham's Archæological Survey Report for 1863-64 (Extra No., J. A. S. B, 1864) .. .. .. .. .. 1
   Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., J. A. S. B., 1868) .. .. .. .. 1
   Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., J. A. S. B., 1875) .. .. .. .. .. 3
   Sketch of the Turki Language as spoken in Eastern Turkestan, Part II. Vocabulary, by R. B. Shaw (Extra No., J. A. S. B., 1878) .. 3
   Introduction to the Maithili Language of North Bihár, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., J. A. S. B., 1882) .. 3
5. Anis-ul-Musharrahin .. .. .. .. .. 3
6. Catalogue of Fossil Vertebrata .. .. .. .. 2
7. Catalogue of the Library of the Asiatic Society, Bengal .. .. 3
8. Examination and Analysis of the Mackenzie Manuscripts by the Rev. W. Taylor .. .. .. .. .. .. 2
9. Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis .. 1
10. Iṣṭiláhát-uṣ-Ṣúfíyah, edited by Dr. A. Sprenger, 8vo. .. .. 1
11. Ináyah, a Commentary on the Hidayah, Vols. II and IV, @ 16/ each .. 32
12. Jawámi-ul-'ilm ir-riyáẓi, 168 pages with 17 plates, 4to. Part I .. 2
13. Khizánat-ul-'ilm .. .. .. .. .. 4
14. Mahábhárata, Vols. III and IV, @ 20/ each .. .. .. 40
15. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I—III, with 8 coloured Plates, 4to. @ 6/ each .. .. 18
16. Puraṇa Sangraha, I (Markandeya Purana), Sanskrit .. .. 1
17. Sharaya-ool-Islám .. .. .. .. .. 4
18. Tibetan Dictionary by Csoma de Körös .. .. .. 10
19. Ditto Grammar " " .. .. .. 8
20. Vuttodaya, edited by Lt.-Col. G. E. Fryer .. .. .. 2

---

Notices of Sanskrit Manuscripts, Fasc. I—XXIV @ 1/ each .. 24
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra .. .. 5

N. B. All Cheques Money Orders &c. must be made payable to the "Treasurer Asiatic Society" only.

BIBLIOTHECA INDICA;

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 785.



# न्यायकुसुमाञ्जलिप्रकरणम्

द्वितीयभागरूपम् ।

न्यायाचार्य्यपदाङ्कितश्रीमदुदयनाचार्य्यविरचितम्

महामहोपाध्यायरुचिदत्तकृत-मकरन्दोद्भासित-वर्द्धमानोपाध्यायप्रणीतप्रकाशसहितम् ।

# NYA'YA-KUSUMA'NJALI-PRAKARAṆAM

EDITED BY

MAHA'MAHOPA'DHYA'YA CHANDRAKA'NTA TARKA'LANKA'RA.

VOLUME II.

FASCICULUS II.




CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57 PARK STREET.

1891.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# Asiatic Society of Bengal,

No. 57, PARK STREET, CALCUTTA.

AND OBTAINABLE FROM

THE SOCIETY'S LONDON AGENTS, MESSRS. TRUBNER & CO.
57 AND 59, LUDGATE HILL, LONDON, E. C.

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | | |
|---|---|---|---|
| Advaita Brahma Siddhi, Fasc. I—IV @ /6/ each .. | Rs | 1 | 8 |
| Agni Purána, (Sans.) Fasc. II—XIV @ /6/ each .. | .. | 4 | 14 |
| Aniruddha's Commentary (English) Fasc. I .. .. | .. | 0 | 12 |
| Aṇu Bháshyam, Fasc. I .. .. .. .. | .. | 0 | 6 |
| Aitareya Araṇyaka of the Rig Veda, (Sans.) Fasc. I—V @ /6/ eac. | | 1 | 14 |
| Aphorisms of Sáṇḍilya, (English) Fasc. I .. | .. | 0 | 6 |
| Aphorisms of the Vedánta, (Sans.) Fasc. VII—XIII @ /6/ each | .. | 2 | 4 |
| Ashṭasáhasriká Prajnápáramitá, Fasc. I—VI @ /6/ each .. | .. | 2 | 4 |
| Aśvavaidyaka, Fasc. I—V @ /6/ each .. .. | .. | 1 | 14 |
| Avadána Kalpalatá by Kshemendra (Sans. & Tibetan) Vol. I Fasc. 1—3 @ 1/ Vol. II, Fasc. 1 .. .. .. | .. | 4 | 0 |
| Bhámatí, (Sans.) Fasc. I—VIII @ /6/ each .. .. | .. | 3 | 0 |
| Brahma Sútra, (English) Fasc. I .. .. .. | .. | 0 | 12 |
| Brihaddevatá, (Sans.) Fasc. I—II @ /6/ each .. .. | .. | 0 | 12 |
| Brihaddharma Puráṇam, Fasc. I—II @ /6/ each .. | .. | 0 | 12 |
| Brihat Araṇyaka Upanishad, (Sans.) Fasc. VI, VII & IX @ /6/ each | .. | 1 | 2 |
| Ditto (English) Fasc. II—III @ /6/ each .. | .. | 0 | 12 |
| Brihat Saṃhitá, (Sans.) Fasc. II—III, V—VII @ /6/ each .. | .. | 1 | 14 |
| Chaitanya-Chandrodaya Náṭaka, (Sans.) Fasc. II—III @ /6/ each | .. | 0 | 12 |
| Chaturvarga Chintámaṇi, (Sans.) Vols. I, Fasc. 1—11; II, 1—25; III, Part I Fasc. 1—18, Part II, Fasc. 1—7 @ /6/ each .. | .. | 22 | 14 |
| Chhándogya Upanishad, (English) Fasc. II .. .. | .. | 0 | 6 |
| Daśarupa, Fasc. II and III @ /6/ .. .. .. | .. | 0 | 12 |
| Gobhilíya Grihya Sútra, (Sans.) Fasc. I—XII @ /6/ each .. | .. | 4 | 8 |
| Hindu Astronomy, (English) Fasc. II—III @ /6/ each .. | .. | 0 | 12 |
| Kála Mádhava, (Sans.) Fasc. I—IV @ /6/ .. .. | .. | 1 | 8 |
| Kátantra, (Sans ) Fasc. I—VI @ /12/ each .. .. | .. | 4 | 8 |
| Kathá Sarit Ságara, (English) Fasc. I—XIV @ /12/ each .. | .. | 10 | 8 |
| Kaushitakí Brahman Upanishads, Fasc. II .. .. | .. | 0 | 6 |
| Kúrma Puráṇa, (Sans.) Fasc. I—IX @ /6/ each .. | .. | 3 | 6 |
| Lalita-Vistara (Sans.) Fasc. II—VI. @ /6/ .. .. | .. | 1 | 14 |
| Lalita-Vistara, (English) Fasc. I—III @ /12/ each .. | .. | 2 | 4 |
| Madana Párijáta, (Sans.) Fasc. I—VIII @ /6/ each .. | .. | 3 | 0 |
| Manuṭíká Sangraha, (Sans.) Fasc. I—III @ /6/ each .. | .. | 1 | 2 |
| Márkaṇḍeya Puráṇa, (Sans.) Fasc. IV—VII @ /6/ each .. | .. | 1 | 8 |
| Márkaṇḍeya Puráṇa (Eng.) Fasc I—II @ /12/ each .. | .. | 1 | 8 |
| Mímáṃsá Darśana, (Sans.) Fasc. II—XIX @ /6/ each .. | .. | 6 | 12 |
| Nárada Pancharátra, (Sans.) Fasc. IV .. .. | .. | 0 | 6 |
| Nárada Smriti, (Sans.) Fasc. I—III @ /6/ .. .. | .. | 1 | 2 |
| Nayavártikam, (Sans.) Fasc. I .. .. .. | .. | 0 | 6 |
| Nirukta, (Sans.) Vol. I, Fasc. IV—VI; Vol. II, Fasc. I—VI; Vol. III, Fasc. I—VI; Vol. IV, Fasc. I—VII @ /6/ each Fasc. .. | .. | | 4 |
| Nítisára, or The Elements of Polity, By Kámandaki, (Sans.) Fasc. II—V @ /6/ each .. .. .. .. | .. | 1 | 8 |
| Nyáyabindutika (Sans.) .. .. | .. | 0 | 10 |
| Nyáya Kusumánjali Prakaraṇam (Sans.) Vol. I, Fasc. 1—6 Vol. II, Fasc. 1—2 @ /6/ each .. .. .. | .. | 3 | 0 |
| Pariśishṭa Parvan (Sans.) Fasc. I—IV @ /6/ each .. | .. | 1 | 8 |

(Continued on third page of Cover.)

केवलं प्रेरणायामहमधिष्ठिता, अपितु प्रतिरोधेऽपि। योहि यत्र प्रभवति, स तस्य प्रेरणावद्धारणेऽपि समर्थः, यथाऽर्व्वाचीनः शरीरप्राणप्रेरणधारणयोरिति दर्शितं तपामीत्यादिना।

धृतेः खल्वपि। स्थित्यादि ब्रह्माण्डपर्य्यन्तं हि जगत् साक्षात् परम्परया वा विधारकप्रयत्नाधिष्ठितं गुरुत्वे सत्यपतनधर्मकत्वात्, वियति विहङ्गमशरीरवत् तत्संयुक्तद्रव्यवच्च। एतेनेन्द्राग्नियमादिलोकपालप्रतिपादका-अप्यागमा व्याख्याताः। सर्व्वावेशनिबन्धनश्च सर्व्वतादात्म्यव्यवहारः, आत्मैवेदं सर्व्वमिति। यथा एकएव*

तिलादित्यर्थः(१)। विहगादिसंयुक्तद्रव्यान्तरेण व्यभिचारनिराशाय तत् साध्येऽन्तर्भावयति। परम्परया वेति। तत्र दृष्टान्तमाह। तत्संयुक्तेति। एतेन, धारकप्रयत्नधृतत्वव्युत्पादनेन। व्याख्याताः,(२) मुख्यार्थतयेति शेषः। नन्विन्द्रादिदेवताभेदप्रतिपादकागमस्य मुख्या-

* अयमेव,—इति खा०।

(१) ननु साक्षात् परम्परया वेति न समुच्चयः, एकत्रोभयथाऽधिष्ठाना-भावात्। प्रत्येकागमंसाध्ये च व्यभिचारइत्यतआह प्रयत्नप्रतिबद्ध-पतनमिति। एतेन मूले व्यर्थविशेषणमपि सूचितम्।

(२) मुख्यार्थतयेति शेष इति धारकप्रयत्नात्तदाश्रयाच्च भेदसिद्धावद्वैत-निरासे इन्द्रादिदेवतानां परस्परभेदप्रतिपादकागमा मुख्यार्था-एवेत्यर्थः।

मायावी अश्वोवराहो व्याघ्रोवानरः किन्नरोभिक्षुस्तापसोविप्र इत्यादि।

अदृष्टादेव तदुपपत्तेरन्यथासिद्धमिदमिति चेत्। तद्भावेऽपि प्रयत्नान्वयव्यतिरेकानुविधानेन तस्यापि स्थितिं प्रति कारणत्वात्। कारणैकदेशस्य च कारणान्तरं प्रत्यनुपाधित्वात्। उपाधित्वे वा सर्व्वेषामकारणत्वप्रसङ्गात्। शरीरस्थितिरेवं, न त्वन्यस्थितिरिति चेत्। न। प्राणेन्द्रिययोः स्थितेरव्यापनात्। प्राङ्न्यायेनापास्तत्वाच्च। अत्राप्यागमः। एतस्य वा अक्षरस्य प्रशासने

---

र्थतायामभेदप्रतिपादकागमविरोध इत्यत आह। सर्व्वावेशेति। [१]आवेशो ज्ञानादिमत्संयोग इति वक्ष्यते। तद्भावेऽपीति। पतनप्रतिबन्धकसंयोगभेदः स्थितिः। [२]अतएव वायुसंयोगादाकाशपक्षस्थितिवत्सा स्यादित्यपास्तम्। अनुपाधित्वादिति। साधनव्यापकत्वादित्यर्थः। प्राङ्न्यायेन, विशेषस्य विशेषवानिति न्यायेनेत्यर्थः। किमिदं शरीरत्वं यत्साचात् प्रयत्नाधिष्ठितत्वे परमाणूनां प्रसज्यते

---

(१) आवेश इति ज्ञानादिमता ईश्वरेण संयोगः सम्बन्धः साक्षात्परम्परासाधारणइत्यर्थः। वक्ष्यते इति यो लोकत्रयमाविश्येत्यत्रावेशपदव्याख्यानावसरे मूलएव।

(२) अतएवेति प्रयत्नान्वयव्यतिरेकानुविधानेन स्थितिं प्रति तद्धेतुत्वादेवेत्यर्थः।

गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः,—इति। प्रशासनं दण्डभूतः* प्रयत्नः।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः—

इति स्मृतिः। अत्रोत्तमत्वमसंसारित्वं सर्व्वज्ञत्वादि च। परमत्वं सर्व्वोपास्यता। लोकत्रयमिति सर्व्वोपलक्षणम्। आवेशो ज्ञानचिकीर्षाप्रयत्नवतः संयोगः। भरणं धारणम्। अव्ययत्वमागन्तुकविशेषगुणशून्यत्वम्। ऐश्वर्य्यं संकल्पाप्रतिघातः,—इति। एतेन कूर्म्मादिविषया अप्यागमा व्याख्याताः।

संहरणात् खल्वपि। ब्रह्माण्डादि द्व्यणुकपर्य्यन्तं जगत् प्रयत्नवद्विनाश्यं विनाश्यत्वात् पाठ्यमानपटवत्। अत्राप्यागमः,—

---

इत्यादिना वेत्यर्थः। इत्यादेरित्यादिपदसंग्राह्यमाह। संहरणादिति। ब्रह्माण्डादीति। ब्रह्माण्डादिकं (१)स्वजनकप्रयत्नसमानकालीनचरम-

---

* दण्डभृतः,—इति आ०।

---

(१) नन्वदृष्टद्वारा अस्मदादिनाश्यत्वेनार्थान्तरमित्यनुशयादाह स्वजनकेति। स्वजनकप्रयत्नेन समानकालीनं चरमकारणं यस्य नाशस्य, तत्प्रतियोगीत्यर्थः। अदृष्टद्वारकप्रयत्नस्यापि कालादिकारणसमानकालीनतयाऽर्थान्तरतादवस्थ्यमत उक्तं, चरमेति। कालीनादि-

एष सर्व्वाणि भूतानि समभिव्याप्य मूर्त्तिभिः।
जन्मवृद्धिक्षयैर्नित्यं सम्भ्रामयति चक्रवत्॥
सर्व्वभूतानि कौन्तेय, प्रकृतिं यान्ति मामिकीम्।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्॥ इत्यादि।

एतेन रौद्रमंशं प्रतिपादयन्तोऽप्यागमा व्याख्याताः। पदात् खल्वपि।

कार्य्यत्वान्निरूपाधित्वमेवं धृतिविनाशयोः।

---

कारणनाशप्रतियोगीति साध्यार्थः। सर्व्वभूतानीति। परमाणुमात्रावशिष्टानीत्यर्थः।

ननु नाशविशेषएव प्रयत्नपूर्व्वकोऽन्यस्त्वन्यथाऽपि भविष्यतीत्याशङ्क्य वृत्तसमाधानं कुर्वाणएव ग्रन्थलाघवाय वर्त्तिष्यमाणेऽप्यतिदिशति। कार्य्यत्वादिति। यथा धृतिविनाशयोः कार्य्यकारणभावो-

---

समानकालीनत्वमादायार्थान्तरत्वमतआह प्रयत्नेति। उदासीनप्रयत्नसिद्ध्याऽर्थान्तरमतउक्तं, स्वजनकेति। केचित्तु उदासीनसिद्धावप्रयोजकत्वमिति विपक्षबाधकसूचनाय तदित्याहुः। स्वपदं चरमकारणपरं ध्वंसपरं वा। न चैवं साध्याप्रसिद्धिः, अस्मदादिप्रयत्नस्यैव दृष्टान्तत्वात्। तन्नाशचरमकारणस्य स्वविषयकसाक्षात्कारस्य स्वजनकप्रयत्नेन विषयीभूतेन समानकालत्वात्। यत्नध्वंसकारणयत्नसमानकालीनस्वसाक्षात्कारहेतुकनाशप्रतियोगित्वाच्च। पटादिच पक्षसम इति न तेषु व्यभिचारः।

विच्छेदेन पदस्यापि प्रत्ययादेश्च पूर्व्ववत् ॥५॥

पदशब्देनाच पद्यते गम्यते व्यवहाराङ्गमर्थोऽनेनेति वृद्धव्यवहारएवोच्यते। अतोऽपीश्वरसिद्धिः। तथाहि। यदेतत् पटादिनिर्म्माणनैपुण्यं कुविन्दादीनां, वाग्व्यवहारश्च व्यक्तवाचां, लिपितत्क्रमव्यवहारश्च बालानां, स सर्व्वः स्वतन्त्रपुरुषविश्रान्तोव्यवहारत्वात्। निपुणतरशिल्पिनिर्म्मितापूर्व्वघटघटनानैपुण्यवत्, चैत्रमैत्रादिपदवत्, पत्राक्षरवत्, पाणिनीयवर्णनिर्देशक्रमवच्चेति।

आदिमान् व्यवहारएवम्, अयन्त्वनादिरन्यथाऽपि भविष्यतीति चेत्। न। तदसिद्धेः। आदिमत्तामेव साधयितुमयमारम्भः। न चैवं संसारस्यानादित्वभङ्ग-

---

विपक्षे बाधको निरुपाधित्वग्राहकः, तथा पदस्यापि सएव तद्ग्राहक इत्यर्थः। न चादिमत्त्वमुपाधिः, प्रलये विच्छेदादनादित्वाभावेन साधनव्यापकत्वादित्याह। विच्छेदेनेति। प्रत्ययादिहेतुष्वपि पूर्व्ववत्कार्य्यकारणभावएव विपक्षबाधक इत्यर्थः।

व्यक्तवाचो मनुष्याः। स्वतन्त्रेति। तज्जातीयव्यवहारानुपजीवित्वं पुरुषस्य स्वातन्त्र्यम्। साध्येषु क्रमेण दृष्टान्ताः, निपुणेत्यादि। आदिमानिति। सादिव्यवहारत्वमुपाधिरित्यर्थः। अन्यथाऽपीति।

प्रसङ्गः, तथापि तस्याविरोधात्। न हि चैत्रादिव्यवहारोऽयमादिमानिति भवस्याप्यनादिता नास्ति, तदनादित्वे वा न चैत्रादिपदव्यवहारोऽप्यादिमानिति। अस्त्वर्व्वाग्दर्शी कश्चिदेवात्र मूलमिति चेत्। न। तेनाशक्यत्वात्। कल्पादावादर्शाभासस्याप्यसिद्धेः। साधितौ च सर्गप्रलयौ।

ननु व्यवहारयितृवृद्धः शरीरी समधिगतो न चेश्वरस्तथा, तत्कथमेवं स्यात्। न। शरीरान्वयव्यतिरेकानुविधायिनि कार्य्ये तस्यापि तद्वत्त्वात्। गृह्णाति हीश्वरोऽपि कार्य्यवशाच्छरीरमन्तराऽन्तरा दर्शयति च विभूतिमिति। अत्राप्यागमः,—

पिताऽहमस्य जगतो माता धाता पितामहः।

तथा,

---

स्वतन्त्रपुरुषं विनाऽपीत्यर्थः। तथापीति। पूर्वपूर्वसर्गेऽपि तज्जातीयव्यवहारस्येश्वरपूर्वकत्वादित्यनादित्वं न विरुध्यते इत्यर्थः। इदानीन्तनापूर्वव्यवहारस्य सादित्वेऽपि न भवस्यानादित्वं हीयते इत्याह। न हीति। तदनादित्वे इत्यत्रापि न हीत्यनुषज्यते। अर्व्वागिति। यद्व्यवहारं दृष्ट्वा व्यवह्रियते, सोऽपि नास्तीत्यर्थः। शरीरान्वयेति। ईश्वरस्यादृष्टाभावेऽपि तच्छरीरसाध्यहेतुकास्मदादिभोगसम्पादकादृष्टादेवेश्वरस्य शरीरोत्पत्तिरिति भावः। पिता-

यदि ह्यहं न वर्त्तेयं* जातु कर्म्मण्यतन्द्रितः।
मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ, सर्व्वशः॥
उत्सीदेयुरिमे लोका न कुर्य्यां कर्म्म चेदहम्,—इति।
एतेन, नमः कुलालेभ्यः कर्म्मारेभ्य इत्यादि यजूंषि बोद्धव्यानि।

प्रत्ययोऽपि। प्रत्ययशब्देनाच समाश्वासविषयप्रामाण्यमुच्यते। तथाच प्रयोगः। आगमसंप्रदायोऽयं कारण-

ऽहमस्येति। अस्य जगतोऽहमेव[१] पित्रादिरित्यर्थः। यदि ह्यहमिति। यदि ह्यहं न वर्त्तेयं, तदा लोक्यन्ते इति लोकाः प्रामाणिकव्यवहारा उत्सीदेयुरिति व्यवहितेनान्वयः। अत्र हेतुः, मम वर्त्मेति। एतेन, घटादिव्यवहारस्य स्वतन्त्रपुरुषपूर्वकत्वव्युत्पादनेन। कुलालादिदेहवत ईश्वरस्य तथा भावादित्यर्थः। प्रत्ययपदं समाश्वासयत्कं तत्सम्बन्धि तद्विषयं प्रामाण्यं लक्षयतीत्याह। प्रत्ययशब्देनेति। तथा चेति। आगमस्य सम्प्रदायः प्रवाहः [२]प्रमात्वप्रयोजकवाक्यार्थ-

* वर्त्तय,—इति का० आ०।

(१) पित्रादिरिति व्यवहारयितृत्वादिति भावः।

(२) ननु मूले कारणपदं वैयर्थ्यं, अदृष्टादिजन्यत्वमादायार्थान्तरं, मनसि व्यभिचारश्चेत्यन्यथा व्याचष्टे प्रमात्वप्रयोजकेति। एतच्च विपक्षबाधकसूचनाय, न तु साध्ये प्रविष्टम्। अतएवाग्रिमसाध्ये नोपात्तम्।

गुणपूर्व्वकः प्रमाणत्वात्, प्रत्यक्षादिवत्। न हि प्रामाण्य-प्रत्ययं विना क्वचित् समाश्वासः। न चासिद्धस्य प्रामाण्यस्य प्रतीतिः। न च स्वतः प्रामाण्यमित्यावेदितम्। न च नेदं प्रमाणं*, महाजनपरिग्रहादित्युक्तम्। न चासर्व्वज्ञो धर्म्माधर्म्मयोः स्वातन्त्र्येण प्रभवति। न चासर्व्वज्ञस्य गुणवत्तेति निःशङ्कमेतत्।

श्रुतेः खल्वपि। तथाहि। सर्व्वज्ञप्रणीता वेदावेदत्वात्, यत्पुनर्न सर्व्वज्ञप्रणीतं नासौ वेदो यथेतरवाक्यम्।

---

प्रमारूपगुणजन्यः (१)यथार्थविवक्षापयिषादिवक्तृगुणजन्यो वा प्रमाणशब्दत्वात् लौकिकप्रमाणशब्दवदित्यर्थः। लक्षणाबीजं सम्बन्धमाह। न हीति। न च प्रमाणत्वमसिद्धं, प्रामाण्याज्ञाने पारलौकिके कर्म्मणि वेदबोधिते प्रेक्षावतां प्रवृत्त्यनुपपत्तेरित्याह। न चेति। तथापि तेन वक्तृगुणपूर्वकेणैव भाव्यमित्यसिद्धमित्यत आह। न च स्वत इति। तथापि वक्तुः सार्वज्ञ्यं कुतः सिध्यतीत्याह। न चेति। तथाहीति। यद्यपि परैः सर्वज्ञानङ्गीकारात् तत्प्रणीतत्वं परं प्रत्य-

---

* नचेदमप्रमाणं,—इति आ०।

---

(१) अध्यापकत्वमादायार्थान्तरमित्यरुचेराह यथार्थेति। न चात्रापि दोषतादवस्थ्यम्, अस्मदादेरनुवक्तृतया वक्तृत्वाभावात्। स्वतन्त्रवक्तृपरत्वाद्वा।

ननु किमिदं वेदत्वं नाम? वाक्यत्वस्यादृष्टविषय-वाक्यत्वस्य च विरुद्धत्वात्। अदृष्टविषयप्रमाणवाक्य-त्वस्य चासिद्धेः। मन्वादिवाक्ये गतत्वेन विरोधाच्चेति

---

सिद्धं, (१)तथाप्यात्मत्वमसंसारिवृत्ति जातित्वात् पटत्ववत्, स चासं-सारी किञ्चिद्वाक्यप्रणेता पुरुषत्वादिति साध्यप्रसिद्धौ वेदा असं-सारिपुरुषप्रणीताः,—इति साध्यम्। (२)न चास्मदाद्युच्चरिते वेदे व्यभिचारः, (३)वेदज्ञानाजन्यज्ञानजन्यत्वस्य साध्यत्वादिति भावः। विरु-द्धत्वादिति। प्रतारकवाक्यस्याप्यदृष्टविषयत्वादित्यर्थः। मन्वादीति।

---

(१) न चाप्रयोजकत्वम्, अन्यथा दुःखित्वमसंसारिवृत्ति धर्मत्वादित्या-दिकमपि स्यादिति वाच्यम्। ईश्वरप्रतिपादकागमादेर्विपक्षबाध-कस्य सत्त्वात्तत्र च तदभावात्।

(२) न चास्मदादीति ननु तस्य पक्षत्वात् पक्षसमत्वाद्वा कथं तत्र व्यभिचारः। अन्यथा वेदज्ञानाजन्येत्यादिसिद्धान्ते का गतिः। यदि चाजन्यज्ञानमादाय तत्र साध्यसत्त्वमिति व्यतिरेकित्वमविकलं, तदाश्रयपुरुषमादाय प्रकृतेऽपि तथेति तुल्यमिति चेत्। न। असंसारिपुरुषप्रणीतत्वं तत्पाठताद्याद्युच्चरितत्वमभिप्रेत्य व्यभि-चारदर्शनात्। एतदभिप्रायेणैव मूले मन्वादिवाक्ये व्यभिचारोद्भा-वनम्। अन्यथा तस्यापि सर्वज्ञप्रणीतत्वेन तदभावात्। अन्यथा तु चिन्त्यम्।

(३) वेदज्ञानाजन्येति अप्रसिद्धिवारणाय वेदज्ञानेति विशेषणम्। अस्म-दाद्युच्चरितवेदस्यापि पक्षत्वादजन्यज्ञानमादाय साध्यसत्त्वात्तत्र न व्यभिचारः। न चैवं वेदत्वहेतुविवेचने व्यर्थविशेषणत्वम्। अत्र-

चेत्। न। अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिगृहीतवाक्यत्वस्य तत्त्वात्। न ह्यस्मदादीनां प्रत्यक्षादि मूलम्; नापि भ्रमविप्रलिप्से, महाजनपरिग्र-

---

मन्वादिवाक्यस्याप्यदृष्टविषयप्रमाणत्वादित्यर्थः। अनुपलभ्यमानेति। मन्वादिवाक्ये च वेदस्येव मूलान्तरस्योपलभ्यमानत्वादित्यर्थः।

ननु वाक्यत्वमसिद्धं (१)समुदायस्याप्रतिपादकत्वात्। न च शाखासमुदायो वेदः, तस्य वेदनिरूप्यत्वात्। नापि महाजनानां वेदाकारानुगतव्यवहाराद्वेदत्वं जातिः, देवदत्तीयत्वानुमापकशब्दवृत्तिजातिभिः सङ्करप्रसङ्गात्। नापि स्वर्गकामादिशब्दः, स्मृत्यादौ तथात्वात्।

---

ग्राह्याभावतया व्याप्तिग्रहे तदभावात्। वस्तुतस्तथा सति व्यतिरेकिणि व्यर्थविशेषणत्वं नोद्भाव्येत। न चेष्टापत्तिः, कथकसम्प्रदायविरोधात्। नीलधूमस्यापि व्यतिरेकितया गमकत्वापत्तेः। यदि च व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते इति मतं, तदा प्रकृतेऽपि तुल्यमिति पूर्व्वासरत्वादेवान्वयतो वेति कल्पान्तरमिति।

(१) समुदायस्येति पदवाक्यसमुदायविशेषो वेदः पक्षः, तत्र विशिष्टैकार्थप्रतिपादकत्वरूपस्य वाक्यत्वस्य समुदाये विरहादसिद्धिरित्यर्थः। ननु समुदितानि पदान्येव समुदायः, अतिरिक्तस्यानभ्युपगमात्। तत्र च प्रतिपादकत्वसत्त्वाद्वाक्यत्वमप्रत्यूहमेव। अन्यथा वाक्यत्वमप्रसिद्धमेव स्यात्। प्रत्येकपदे वाक्यत्वाभावात्। समुदायस्याप्रतिपादकत्वात्। यदि च नैवं, तदा प्रमाणत्वस्यापि प्रतिपादकगर्भतया तद्गर्भसिद्धान्तलक्षणमपि भज्येतेति चिन्त्यम्।

हादित्युक्तम्। नापि परम्परैव मूलं, महाप्रलये* विच्छेदादित्युक्तम्।

अन्वयतो वा, वेदवाक्यानि पौरुषेयाणि वाक्यत्वात्, अस्मदादिवाक्यवत्। अस्मर्य्यमाणकर्तृकत्वान्नैवमिति चेत्। न। असिद्धेः।

अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः।
प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते।

---

उच्यते। [१]शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दाजन्यवाक्यार्थज्ञानजन्यप्रमाणशब्दत्वं वेदत्वम्। ईश्वरप्रमाया अजन्यत्वात्। वेदार्थस्यानुमानादिविषयत्वेऽप्यनुमानादेर्वेदोपजीवकत्वात्। स्मृत्यादीनां वेदसमानार्थत्वेऽपि शब्दजन्यधीजन्यत्वात्। वेदादर्थं प्रतीत्य तत्प्रणयनात्।

वाक्यादिति सङ्गृहीतं हेतुं व्याचष्टे। अन्वयतो वेति। ननु किं पौरुषेयत्वं? न तदर्थधीजन्यत्वं तदुच्चारणधीजन्यत्वं वा, अध्यापकतदुभयजन्यत्वेन सिद्धसाधनात्। नापि स्वतन्त्रपुरुषप्रणीतत्वम्, इदानीं पठ्यमाने वेदे तदभावात्। न च स्वतन्त्रपुरुषप्रणीतजातीयत्वं साध्यम्, [२]आद्यस्मृत्यादौ†

---

* प्रलये,—इति क्व०।
† स्मृत्यादौ,—इति मकरन्दसम्मतः पाठः।

---

(१) शब्दतदुपजीवीति शब्दप्रकाशे विपञ्चितम्।
(२) स्मृत्यादाविति आद्यस्मृत्यादावित्यर्थः। एतदपि तज्जातीयत्वस्याभेदगर्भत्वविवक्षायामन्यथा सिद्धान्तेऽप्यगतेरिति ध्येयम्।

व्यभिचारात्। तज्जातीयस्य स्वतन्त्रपुरुषप्रणीतत्वाभावात्। नाप्यर्थं प्रतीत्य तदर्थपरतया प्रतिसन्धीयमानपदत्वं पौरुषेयत्वम्, अर्थज्ञानवताऽध्यापकेन सिद्धसाधनात्।

अत्राहुः। सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वं पौरुषेयत्वम्। आद्यस्मृतावपि तज्जातीयत्वान्न व्यभिचारः। यद्वा, वेदत्वं सजातीयोच्चारणानपेक्षोच्चरितवृत्ति [१]प्रमाणत्वावच्छेदकवाक्यधर्मत्वात् स्मृतित्ववत्।

---

(१) प्रमाणतावच्छेदकेति न चावच्छेदकत्वं यद्यन्यूनानतिरिक्तवृत्तित्वं, तदाऽसिद्धिः, अनतिरिक्तवृत्तित्वमात्रञ्चेत्तदा पक्ष्यमाणवेदत्वादौ व्यभिचार इति वाच्यम्। स्वसमानानुपूर्व्वीकसकलवाक्यवृत्तिधर्म्मत्वादित्यत्र तात्पर्य्यात्। न च विशेष्यभागस्यैव व्याप्यत्वं तावन्मात्रञ्च स्वरूपासिद्धमिति वाच्यम्। अखण्डाभाववदखण्डोपाधौ न व्यर्थत्वमिति मतेनोक्तत्वात्। यन्निष्ठा यन्निरूपितेति न्यायात्। अतएव प्रमेयत्वादेः शास्त्रे हेतुत्वेनाभिधानं प्रयोजनाभावान्नान्यत्र विशेषणप्रक्षेपः। अन्यथा अखण्डाभावे का गतिः। तत्रापि प्रतियोगिकोटावनेकविशेषणप्रक्षेपसंभवात्। अतएव भोगाधारत्वं भोगसमवायिकारणातिरिक्तवृत्ति सकलभोगाधिकरणवृत्तित्वादित्यत्र भोगाधिकरणपदं सार्थकम्। यत्तु व्याप्याश्रयसंकोचकविशेषणस्य व्यर्थत्वं यथा नीलधूमे, न तु विकाशकस्य, यन्निष्ठा यन्निरूपिता इति न्यायेन तद्विशेषणं विना तन्निष्ठव्याप्तेरग्रहात्। प्रकृते च विशेष्यभागस्य न्यूनवृत्तित्वविशिष्टस्याधिकवृत्तित्वमिति तस्य विकाशकत्वमिति। तत् प्रमादविजृम्भितम्। व्याप्याश्रयस्यैवं विकाशेऽपि व्याप्त्याश्रयविकाशाभावात् घटितोपाधेरेकत्वात्। न च व्याप्याश्रयविकाशकस्यापि न

वेदान्तकृद्वेदविदेव चाहम्,–इति स्मृतेः। तस्माद् यज्ञात् सर्व्वहुत ऋचः सामानि यज्ञिरे,–इत्यादि श्रुति-पाठकस्मृतेश्च।

अर्थवादमात्रमिदमिति चेत्। न। कर्त्तृस्मरणस्य सर्व्वत्राविध्यर्थत्वात्। तथाचास्मरणे कालिदासादेर-स्मरणात्। एवञ्च कुमारसम्भवादेरकर्त्तृकत्वप्रसङ्गः। अनैकान्तिकत्वं वा हेतोः।

प्रमाणान्तरागोचरार्थत्वात् सत्प्रतिपक्षत्वमिति

---

यज्ञादिति। यज्ञो विष्णुः। ननु वेदे कर्त्तृस्मरणमर्थवादतया न मानं, कार्य्यान्वितज्ञानजनकस्यैव पदस्य शक्तिग्रहादित्याह। अर्थ-वादेति। आदित्यो वै यूप इत्यादेरर्थवादस्य मुख्यार्थत्वे बाधकाद-प्रमाणत्वात् स्तुतिपरत्वेऽपि प्रकृते बाधकानां निरासादविध्यर्थस्यापि मुख्यार्थत्वमेव। अन्यथा यन्न दुःखेन सम्भिन्नमित्यादेरपि स्वार्थ-परित्यागप्रसङ्गात्। कालिदासस्मरणेऽपि विध्यभावात् तत्काव्य-स्याप्यकर्त्तृकत्वप्रसङ्गात्। सकर्तृकत्वे वा, तत्रैवायं हेतुरनैकान्त इत्याह। कर्त्तृस्मरणस्येति। प्रमाणान्तरेति। वेदान पौरुषेयाः प्रमाणान्तरागोचरार्थत्वात्, यन्नैवं तन्नैवं यथा मन्वादिवाक्यमित्यर्थः।

---

व्यर्थत्वं, तत्र यन्निष्ठेत्यादिन्यायस्याप्यसम्भवेन मानाभावादिति। अन्यथा धूमालोकान्यतरत्वादावपि व्यर्थविशेषणत्वं न स्यात्। आलो-कादिमदस्यायेगोलकादिव्याप्याश्रयविकाशत्वात्।

चेत्। न। प्रणेतारं प्रत्यसिद्धेः। अन्यं प्रत्यनैकान्तिकत्वात्। आकस्मिकस्मितबीजसुखानुस्मृतेः कारणविशेषस्यान्यं प्रति प्रमाणान्तरागोचरस्यापि तेनैव वक्त्रा प्रतिपाद्यमानत्वात्।

वक्तैव प्रकृते न सम्भवति, हेत्वभावे फलाभावात्, चक्षुरादीनां तथासामर्थ्यात्, अस्मदादीन्द्रियवत्, मनसोवहिरस्वातन्त्र्यात्। न। चेतनस्य ज्ञानस्येन्द्रियस्य मनसो वा पक्षीकरणे आश्रयासिद्धेः प्रागेव प्रपञ्चनात्। नित्यनिराकरणे चासामर्थ्यात्।

---

यदि वेदप्रणेतृप्रमाणान्तरागोचरार्थत्वं हेतुः, तदा तत्प्रणेतुरीश्वरस्य प्रत्यक्षगोचरत्वादसिद्धिः। अथ यस्य कस्यापि प्रमाणान्तरागोचरार्थत्वं, तदाऽनैकान्तिकमित्याह। प्रणेतारमिति। अनैकान्तिकत्वं स्पष्टयति। आकस्मिकेति। [१]दृष्टकारणोपहारं विना जातस्मितस्य यद्बीजं सुखानुस्मृतिरूपं कारणं, तस्येत्यर्थः। सर्वज्ञोवेदवक्ता न सम्भावनाऽऽस्पदं वाक्यार्थज्ञानसामग्रीरहितत्वादित्याह। वक्तैवेति। ईश्वरोनातीन्द्रियार्थदर्शी पुरुषत्वात्, तज्ज्ञानं वा नातीन्द्रियविषयं ज्ञानत्वात्, तदिन्द्रियं वा नातीन्द्रियार्थग्राहि इन्द्रियत्वात्, तन्मनोवा नातीन्द्रिये प्रवर्त्तते मनस्त्वादित्यादयः प्रयोगाः प्रागेव निरस्ता इत्याह। चेतनस्येति।

---

(१) आकस्मिकस्य तत्र बीजस्येति व्याहृतमतआह दृष्टेति।

परमाण्वादयो न कस्यचित् प्रत्यक्षाः तत्सामग्रीरहितत्वादिति चेत् । न । द्रष्टारं प्रत्यसिद्धेः । अन्यं प्रति सिद्धसाधनात् ।

तथापि वाक्यत्वं न प्रमाणम्, अप्रयोजकत्वात् । प्रमाणान्तरगोचरार्थत्वप्रयुक्तं तत्र पौरुषेयत्वं, न तु वाक्यत्वप्रयुक्तम् । न । सुगताद्यागमानामपौरुषेयत्वप्रसङ्गात् । प्रमाणवाक्यस्य सत इति चेत् । न । प्रणेतृप्रमाणान्तरगोचरार्थत्वस्य साध्यानुप्रवेशात् । स्वतन्त्रपुरुषप्रणीतत्वं हि पौरुषेयत्वम् । अर्थप्रतीत्येकविषयौ हि विवक्षाप्रयत्नौ स्वातन्त्र्यम् । मन्वादिवाक्यस्यापौरुषेयत्वप्रसङ्गाच्च ।

---

अपि च, सामग्र्यभावात् कार्य्यज्ञानाभावेऽपि अकार्य्यं ज्ञानं न निवर्त्तते इत्याह । नित्येति । उपाधिं शङ्कते । प्रमाणान्तरेति । अत्र साध्याव्यापकत्वमाह । सुगतेति । पक्षधर्म्मावच्छिन्नसाध्यव्यापकत्वादुपाधित्वं स्यादित्याह । प्रमाणेति । प्रणेत्रिति । [१]साध्यादभिन्नत्वे साध्याव्यापकत्वात् भेदनिबन्धनत्वाच्च व्याप्यव्यापकभावस्येत्यर्थः । प्रमाणान्तरगोचरार्थत्वेन [२]शब्देतरप्रमाणगोचरार्थत्वं विवक्षितं, माना-

---

(१) साध्यादभिन्नत्वे इति यद्यप्यत्र नाभेदः, उपाधिभेदस्य स्फुटत्वात् । किञ्च पौरुषेयत्वस्य सुगतागमादावपि सत्त्वादन्यथा वाक्यत्वस्य तत्र व्यभिचारापत्तेरिदञ्च तद्याप्तमिति सर्व्वथा भेदएव, तथाप्येतदक्षरसादेव दोषान्तरदानमिति ब्रूमः । अन्यथा तु चिन्त्यम् ।

(२) शब्देतरेति शब्दतदुपजीविप्रमाणेतरप्रमाणगोचरार्थत्वमित्यर्थः ।

Muntakhab-ul-Tawárikh (English) Vol. II, Fasc. I—V @ /12/ each Rs. 3
Muntakhab-ul-Lubáb. (Text) Fasc. I—XIX @ /6/ each .. .. 7
Mu'áșir-i-'Alamgiri (Text), Fasc. I—VI @ /6/ each .. .. 2
Nokhbat-ul-Fikr, (Text) Fasc. I .. .. .. .. 0
Nizámí's Khiradnámah-i-Iskandari, (Text) Fasc. I and II @ /12/ each .. 1
Riyazu-s-Salátín, (Text) Fasc. I—IV @ /6/ each .. .. 1
Suyúty's Itqán, on the Exegetic Sciences of the Koran, with Supplement. (Text) Fasc. II—IV, VII—X @ 1/ each .. .. .. 7
Ṭabaqát-i-Náșirí, (Text) Fasc. I—V @ /6/ each .. .. 1
Ditto (English) Fasc. I—XIV @ /12/ each .. .. 10
Táríkh-i-Fírúz Shahí of Ziaa-al-dín Barní (Text) Fasc. I—VII @ /6/ each 2
Táríkh-i-Baihaqí, (Text) Fasc. I—IX @ /6/ each .. .. 3
Táríkh-i-Fírozsháhí, of Shams-i-Siráj Afif. (Text) Fasc. I—V @ /6/ each 1
Wís o Rámín, (Text) Fasc. I—V @ /6/ each .. .. .. 1
Zafarnámah, Vol. I, Fasc. I—IX, Vol. II. Fasc. I—VIII @ /6/ each .. 6
Túzak-i-Jahángírí (English) Fasc. I .. .. .. 0

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1 Asiatic Researches. Vols. VII, IX to XI; Vols. XIII and XVII, and Vols. XIX and XX @ /10/ each .. Rs. 80
Ditto Index to Vols. I—XVIII .. .. 5
2 Proceedings of the Asiatic Society from 1865 to 1869 (incl.) @ /4/ per No.; and from 1870 to date @ /6/ per No
3. Journal of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1850 (7), 1851 (7), 1857 (6), 1858 (5), 1861 (4), 1864 (5), 1865 (8), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6) 1886 (8), 1887 (7). @ 1/ per No. to Subscribers and @ 1/8 per No. to Non-Subscribers,

*N. B. The figures enclosed in brackets give the number of Nos. in each Volume.*

4. Centenary Review of the Researches of the Society from 1784—1883 .. 3
General Cunningham's Archæological Survey Report for 1863-64 (Extra No., J. A. S. B, 1864) .. .. .. .. .. 1
Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., J. A S. B., 1868) .. .. .. .. 1
Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., J. A. S. B., 1875) .. .. .. .. 3
Sketch of the Turki Language as spoken in Eastern Turkestan, Part II, Vocabulary, by R. B. Shaw (Extra No., J. A. S. B., 1878) .. 3
Introduction to the Maithili Language of North Bihár, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., J. A. S. B., 1882) .. 3
5. Anis-ul-Musharrahin .. .. .. .. .. 3
6. Catalogue of Fossil Vertebrata .. .. .. .. 2
7. Catalogue of the Library of the Asiatic Society, Bengal .. .. 3
8. Examination and Analysis of the Mackenzie Manuscripts by the Rev. W Taylor .. .. .. .. .. .. 2
9. Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis .. 1
10. Ișțiláhát-uș-Șúfíyah, edited by Dr. A. Sprenger, 8vo. .. .. 1
11. Ináyah, a Commentary on the Hidayah, Vols. II and IV, @ 16/ each .. 32
12. Jawámi-ul-'ilm ir-riyáẓí, 168 pages with 17 plates, 4to. Part I .. 2
13. Khizánat-ul-'ilm .. .. .. .. .. 4
14. Mahábhárata, Vols. III and IV, @ 20/ each .. .. .. 40
15. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I—III, with 8 coloured Plates, 4to. @ 6/ each .. .. 18
16. Puraṇa Sangraha, I (Markandeya Purana), Sanskrit .. .. 1
17. Sharaya-ool-Islam .. .. .. .. .. 4
18. Tibetan Dictionary by Csoma de Körös .. .. .. 10
19. Ditto Grammar " " .. .. .. 5
20. Vuttodaya, edited by Lt.-Col. G. E Fryer .. .. .. 2

---

Notices of Sanskrit Manuscripts, Fasc. I—XXIV @ 1/ each .. 24
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra .. .. 5

N. B. All Cheques Money Orders &c. must be made payable to the "Treas[urer] Asiatic Society" only.

BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 854.



# न्यायकुसुमाञ्जलिप्रकरणम्

द्वितीयभागरूपम् ।

न्यायाचार्य्यपदाङ्कितश्रीमदुदयनाचार्य्यविरचितम्

महामहोपाध्यायरुचिदत्तकृत-मकरन्दोद्भासित वर्द्धमानोपाध्यायप्रणीतप्रकाशसहितम् ।

# NYA'YA-KUSUMA'NJALI-PRAKARAṆAM

EDITED BY

MAHA'MAHOPA'DHYA'YA CHANDRAKA'NTA TARKA'LANKA'RA.

VOLUME II.

FASCICULUS III.




CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1895.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# Asiatic Society of Bengal,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS. LUZAC & CO.

46 Great Russell Street, London, W. C., and Mr. Otto Harrassowitz, Bookseller, Leipzig, Germany.

***Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.***

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | |
|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1–4 @ /6/ each ... | Rs. 1 | 8 |
| *Agni Puráṇa, (Text) Fasc. 2–14 @ /6/ each ... ... ... | 4 | 14 |
| Aitareya Áraṇyaka of the Rig Veda, (Text) Fasc. 1–5 @ /6/ each ... | 1 | 14 |
| Aitareya Brahmana, Fasc. 1–4 @ /6/ ... ... ... | 1 | 8 |
| Aṇu Bháshyam, (Text) Fasc. 1–2 ... ... ... ... | 0 | 12 |
| Aphorisms of Sáṇḍilya, (English) Fasc. 1 ... ... ... | 0 | 6 |
| Ashtasáhasriká Prajnapáramitá, (Text) Fasc. 1–6 @ /6/ each ... | 2 | 4 |
| Aśvavaidyaka, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Avadána Kalpalatá, (Sans. and Tibetan) Vol. I, Fasc. 1–4; Vol. II. Fasc. 1–3 @ 1/ ... ... ... ... ... ... | 7 | 0 |
| *Bhámati, (Text) Fasc. 2–8 @ /6/ each ... ... ... | 2 | 10 |
| Brahma Sútra, (English) Fasc. 1 ... ... ... ... | 0 | 12 |
| Brihaddevata (Text) Fasc. 1–4 @ /6/ each ... ... ... | 1 | 8 |
| Brihadharma Puráṇa, (Text) Fasc. 1–5 @ /6/ each ... ... | 1 | 14 |
| Brihataranyaka Upanishad (English) Fasc. 2–3 @ /6/ each ... | 0 | 12 |
| Chaitandya-Chandrodaya Náṭaka, (Text) Fasc. 2–3 @ /6/ each ... | 0 | 12 |
| *Chaturvarga Chintamaṇi (Text) Vols. II, 1–25; III. Part I, Fasc. 1–18. Part II, Fasc. 1–9 @ /6/ each ... ... ... | 19 | 8 |
| *Chhándogya Upanishad, (English) Fasc. 2 ... ... ... | 0 | 6 |
| *Hindu Astronomy, (English) Fasc. 2–3 @ /6/ each ... ... | 0 | 12 |
| Kála Mádhaba, (Text) Fasc. 1–4 @ /6/ each ... ... ... | 1 | 8 |
| Kátantra, (Text) Fasc. 1–6 @ /12/ each ... ... ... | 4 | 8 |
| Kathá Sarit Ságara, (English) Fasc. 1–14 @ /12/ each ... ... | 10 | 8 |
| Kúrma Purana, (Text) Fasc. 1–9 @ /6/ each ... ... ... | 3 | 6 |
| *Lalita-Vistara, (Text) Fasc. 3–6 @ /6/ each ... ... ... | 1 | 8 |
| Ditto (English) Fasc. 1–3 @ /12/ each ... ... | 2 | 4 |
| Madana Párijáta, (Text) Fasc. 1–11 @ /6/ each... ... ... | 4 | 2 |
| Manutiká Sangraha, (Text) Fasc. 1–3 @ /6/ each ... ... | 1 | 2 |
| *Márkaṇḍeya Puráṇa, (Text) Fasc. 4–7 @ /6/ each ... ... | 1 | 8 |
| Márkaṇḍeya Puráṇa, (English) Fasc. 1–3 @ /12 /each ... ... | 2 | 4 |
| *Mimáṃsá Darṣana, (Text) Fasc. 3–19 @ /6/ each ... ... | 6 | 6 |
| Nárada Smṛiti, (Text) Fasc. 1–3 @ /6/ ... ... ... | 1 | 2 |
| Nyayavártika, (Text) Fasc. 1–2 ... ... ... ... | 0 | 12 |
| *Nirukta, (Text) Vol. I, Fasc. 4–6; Vol. II, Fasc. 1–6; Vol. III, Fasc. 1–6; Vol. IV, Fasc. 1–8 @ /6/ each ... ... ... | 8 | 10 |
| *Nítisára, or The Elements of Polity, By Kámandaki, (Sans.) Fasc. 2–5 @ /6/ each ... ... ... ... ... | 1 | 8 |
| Nyayabindutika, (Text) ... ... ... ... ... | 0 | 10 |
| Nyáya Kusumánjali Prakarana (Text) Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–2 @ /6/ each ... ... ... ... ... | 3 | 0 |
| Pariśishṭa Parvan, (Text) Fasc. 1–5 @ /6/ each... ... ... | 1 | 14 |

THE

# NYAYA-KUSUMANJALI PRAKARANAM

BY UDAYANA'CHA'RYA

## FIRST PART

CONTAINING

THE 1ST, 2ND AND 3RD STAVAKAS

WITH THE COMMENTARY OF

VARDDHAMA'NA AND THE GLOSS OF RUCHIDATTA.

EDITED BY

MAHA'MAHOPA'DHYA'YA CHANDRAKA'NTA TARKA'LANKA'R.

---

*FOR THE BIBLIOTHECA INDICA.*

---

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS.

1891.

THE

# NYĀYA-KUSUMĀÑJALI PRAKARAṆAM

BY UDAYANĀCARYA

## SECOND PART

CONTAINING

THE 4TH AND 5TH STAVAKAS

WITH THE COMMENTARY OF

RUCIDATTA AND THE GLOSS OF VARDDHAMANA

EDITED BY

BANDYAGHAṬIA
MAHĀMAHOPĀDHYĀYA CANDRAKĀNTA
TARKĀLAṄKĀRA

*FOR THE BIBLIOTHECA INDICA.*

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS.
1895.

# न्यायकुसुमाञ्जलिप्रकरणम्।

## (चतुर्थ-पञ्चम-स्तवकात्मकद्वितीयखण्डम्)



न्यायाचार्य्यपदाङ्कित-महामहोपाध्याय-

## श्रीमदुदयनाचार्य्यविरचितम्।



महामहोपाध्याय-रुचिदत्तकृत-मकरन्दोल्लासित-

महामहोपाध्याय-वर्द्धमानकृत-प्रकाशसमेतम्।

---

वङ्गदेशीय-

श्रीलश्री अस्यातिकसमाजानुमत्या

वन्द्यघटीय-

महामहोपाध्याय-

श्रीचन्द्रकान्ततर्कालङ्कार-परिशोधितम्।



कलिकाता-महानगर्य्यां

व्याप्टिष्ट मिशन् यन्त्रे मुद्रितम्।

शकाब्दाः १८१९।

# अनुक्रमणिका।



न्यायकुसुमाञ्जलिप्रकरणमिदमुदयनाचार्य्यविरचितमुदारार्थमतीवोपादेयो ग्रन्थः। बौद्धाधिकापरनामधेयमात्मतत्त्वविवेकं विरचय्य प्रकरणमिदं रचितवानाचार्य्यः। एतद्ग्रन्थे आत्मतत्त्वविवेकस्योल्लेखदर्शनेन ततः पराचीनत्वमेतस्य सुव्यक्तमवगम्यते। आत्मतत्त्वविवेके तावद्बौद्धानां क्षणभङ्गादिवादान्निराकृत्य विज्ञानादतिरिक्तः स्थायी जीवात्मा निरूपितः। न्यायकुसुमाञ्जलिप्रकरणे तस्मिन् यस्योपासनया जीवात्मा निःश्रेयसमधिगच्छति, स भगवानीश्वरः परमात्मपदाभिधेयः सविस्तरं व्यवस्थापितः। अत्रत्या चेश्वरानुमानप्रणाली समीचीना सत्तर्कगर्भा च। इमामेव प्रणालीमनुसृत्य गङ्गेश्वर ईश्वरानुमानचिन्तामणिं रचयाञ्चकार।

सोऽयमत्युपादेयोऽपि ग्रन्थो नेदानीमध्ययनाध्यापनयोः प्रचरति। तत्कारणञ्च ग्रन्थस्य काठिन्येनाध्येतृणामनुत्साहः। वङ्गदेशे तदप्रचारे कारणान्तरमप्यस्ति। इयं किल किंवदन्ती प्रचरति। पूर्व्वं किल मिथिलाप्रदेश एव बाहुल्येन समीचीना न्यायशास्त्रस्य चर्चाऽऽसीत्। गङ्गेशोपाध्यायादयो ग्रन्थकाराश्च बहवस्तत्र प्रादुरभवन्। तदानीं न्यायाध्ययनेच्छवो वङ्गदेशीया मिथिलाप्रदेशं गत्वा न्यायशास्त्राध्ययनमकार्षुः। मैथिलास्त्वध्यापकास्तानध्याप्य तेषां स्वदेशप्रतिगमनसमये तल्लिखितानि समीचीनानि न्यायपुस्तकानि बलादाच्छिप्य नयन्ति स्म। वङ्गदेशीयास्तावद्बुद्धिमन्तः, तत्र न्यायपुस्तकानां सौलभ्ये न्यायचर्चायां वङ्गदेशस्य प्राधान्यं भवेत् स्वदेशस्य प्राधान्यञ्च विलुप्येतेत्येवं शङ्कमानास्ते किलैवं चक्रुः। तदेवं गते वङ्गदेशीयाः केचित् कश्चित् केचिच्च कश्चित् ग्रन्थं कण्ठस्थं कृत्वा स्वदेशमागत्य लिलिखुः। एवं कालेन वङ्गदेशे न्यायग्रन्थानां सौलभ्यं जातम्। हरिदासभट्टाचार्य्यः कुसुमाञ्जलिप्रकरणस्य कारिकांशं गद्यञ्चैकं कण्ठस्थं कृत्वा स्वदेशमागत्य यथास्मृति तद्व्याख्यानं कृतवान्—इति।

1

सम्भाव्यते, अत एव स्मृतिशैथिल्यात् पञ्चमस्तवके उद्देश एव तात्पर्य्यमिति मूलस्यैव कारिका तदुक्तमित्यन्योक्तिप्रकारेण तेनोद्धृता। अन्यत्रापि क्वचित् किञ्चित् व्याख्यावैलक्षण्यं जातम्। कारिकात्मककुसुमाञ्जलेरुपरि नवद्वीपनिवासिना रामभद्रसार्व्वभौमेनाप्येका टीका विरचिता। तत्र चोद्देश एव तात्पर्य्यमित्यादिकारिका मूलकारिकातयैवोद्धृता वर्त्तते। एवं तत्र मूलस्थं गद्यमपि क्वचित् क्वचिदुद्धृतमस्ति। ततोऽनुमीयते तदानीं गद्यपद्यात्मकस्य कुसुमाञ्जलिप्रकरणस्य वङ्गदेशेऽपि कियान् प्रचारो जात इति। तार्किकशिरोमणिरघुनाथशिरोमणीनां प्रादुर्भावकालादारभ्य वङ्गदेशस्य प्राधान्यं मिथिलाप्रदेशस्य प्राधान्यविलोपश्च न्यायचर्च्चायामासीत्। तस्मादारभ्य न्यायाध्ययनेच्छवो मिथिलादेशीया वङ्गदेशमागत्याद्यपर्य्यन्तं न्यायाध्ययनं कुर्व्वन्ति। अतो रघुनाथशिरोमणिभ्यः परवर्त्तिनो रामभद्रसार्व्वभौमस्य समये कुसुमाञ्जलिप्रकरणस्य वङ्गदेशे प्रचारः सम्भाव्यतएव। हरिदासभट्टाचार्य्यकृतव्याख्यासमेतस्य कुसुमाञ्जलिप्रकरणस्यपद्यांशस्य स्वल्पग्रन्थत्वात् मूलग्रन्थसारांशत्वात् मूलग्रन्थापेक्षया सुगमत्वाच्च मूलग्रन्थमनधीत्य स एव ग्रन्थः सर्व्वैरन्तेवासिभिरध्येतुमारब्धः। तदेवं क्रमेण देशान्तरेष्वपि मूलग्रन्थस्याध्ययनमध्यापनञ्च लुप्तकल्पं जातम्। सुतरां ग्रन्थोऽपि लुप्तकल्प एव जातः।

तमिममुपादेयं ग्रन्थं लुप्तकल्पमालोचयद्भिरेतद्देशीयग्रन्थरत्नरक्षाबद्धपरिकरैर्विद्यानुरागिभिरस्यातिकसमाजविद्भिरस्य मुद्रया प्रचारं कर्त्तव्यं निश्चित्य शोधनमुद्रणायाहमनुरुद्धः। मयाऽप्यस्य शोधनाय यथामति कृतः प्रयत्नः। तथाप्यनवधानादिना यद्यत्र किञ्चिदशुद्धमुपलक्ष्येत तद्विद्वद्भिः कृपया शोधनीयमिति कृतोऽयमञ्जलिः। यस्याः समितेरिच्छामात्रेण लुप्तकल्पोऽयमुत्तमो ग्रन्थः कायव्यूहमिदानीं वहति, सेयं समीचीना समितिरीदृशानि रत्नानि रक्षन्ती चिरं जीवतादीश्वरानुग्रहेणेति मनसा प्रार्थयामहे।

यानि पुस्तकान्यवलम्ब्याहमेतस्य शोधनमकरवम्, तान्युच्यन्ते। एवं

तावदस्मल्लिखितं सम्पूर्णं मूलमात्रम्। अन्यत् शान्तिपुरनिवासिश्रीयुक्त रामनाथतर्करत्नभट्टाचार्य्यात् क्रीतं सम्पूर्णं मूलमात्रम्। अपरं काशीतः क्रीतं मूलमात्रमेव शेषे किञ्चित् खण्डितम्। अपरमपि नवद्वीपनिवासि हरिनाथतर्कसिद्धान्तभट्टाचार्य्यसकाशादानीतं मूलं शेषे किञ्चित् खण्डित-मेव। इतरमूलपुस्तकं संस्कृतविद्यालयात् प्राप्तमसम्पूर्णम्। तदेवं मूलस्य पञ्च पुस्तकानि लब्धानि।

प्रकाशस्याप्येकं पुस्तकं सम्पूर्णं समीचीनञ्च तालपत्रलिखितमस्यातिक-समाजात् प्राप्तम्। अन्यत् रामनाथतर्करत्नभट्टाचार्य्यादासादितम्। अपरं हरिनाथतर्कसिद्धान्तभट्टाचार्य्यादानीतं प्रायः सम्पूर्णम्। इतरत् संस्कृत-विद्यामन्दिरात् संगृहीतमसम्पूर्णम्। अन्यत् काशीतः क्रीतमसम्पूर्णम्। अपरं काशीसंस्कृतविद्यालयाध्यक्षात् आनीतं तालपत्रलिखितं समीचीन-मसम्पूर्णम्। तदेवं प्रकाशस्य षट् पुस्तकानि लब्धानि।

मकरन्दस्यैकं पुस्तकं रामनाथतर्करत्नात् प्राप्तम्। अपरं हरिनाथ-तर्कसिद्धान्तभट्टाचार्य्यादधिगतम्। अन्यत् काशीसंस्कृतविद्यामन्दिरस्य-न्यायशास्त्राध्यापकश्रीयुक्तकैलासचन्द्रशिरोमणिभट्टाचार्य्यात् समानीतम्। तदेवं मकरन्दस्य त्रीणि पुस्तकानि लब्धानि। एतानि सर्व्वाण्येव सम्पूर्णानि समीचीनानि च।

प्रकाशग्रन्थः मूलस्य समीचीनव्याख्यारूपो वर्द्धमानप्रणीतः। मकरन्द-ग्रन्थस्तु प्रकाशस्य व्याख्यारूपः समीचीनः सङ्क्षिप्तः सारगर्भश्च रुचिदत्तप्रणीतः।

एतस्य मुद्रापणे प्रवृत्तेन मया प्रथमतः प्रकाशसहितं मूलमेव मुद्रयितु-मारब्धम्। स्थाने स्थाने टिप्पणी दत्ता मकरन्दसन्दर्भश्च निवेशितः। परन्तु प्रकाशस्यार्थवैमल्याय नातिविस्तरः सारगर्भोऽप्युपादेयो मकरन्दसन्दर्भो-ऽप्यवश्यं मुद्रणमर्हतीत्यालोचयता मया तन्मुद्रणाय स्वर्गतो राजा राजेन्द्र-लालमित्रो यश्चापि। तेन चानुमोदिते तन्मुद्रणे ४८ पृष्ठतः प्रभृति यथारीति मकरन्दसन्दर्भोऽपि प्रकाशस्याधस्तान्मुद्रापितः। एवं गते मक-रन्दसन्दर्भस्य पूर्णतायै प्रथमोंऽशः पश्चात् पृथङ्मुद्रापितः। मकरन्दसन्दर्भस्य

यथारीति मुद्रापणारम्भात् परतः क्वचित् क्वचित् मद्दत्तटिप्पण्यन्तु [ ] एतच्चिह्नक्रोडीकृतमस्ति।

अथेदानीमस्य ग्रन्थस्य प्रतिपाद्यविषयं विचारप्रणालीं च संक्षेपेण दिङ्मात्रं प्रदर्शयामि। ग्रन्थेऽस्मिन् पञ्च स्तवकाः सन्ति। (यद्यपि मूले, इति प्रथमस्तवकः—इत्येवमादिका पुष्पिका न दृश्यते, तथापि तत्र तत्रा-वान्तरप्रकरणोपसंहारकारिकायां दर्शनात् प्रकरणसमाप्तिसूचकलिपिसङ्केतस्योपलम्भात् व्याख्यातृभिः सर्व्वैरेव स्तवकविभागस्याङ्गीकृतत्वाच्च स्तवकविभाग इहादृतः)। तेषु च स्तवकेषु यथाक्रमं चार्व्वाक-मीमांसक-सौगत-दिगम्बर-साङ्ख्यानामीश्वरसिद्धिप्रतिकूलानि मतानि निराकृतानि।

तत्र तावद्वैदिकानामग्निहोत्रादिकर्म्मणां स्वर्गादिफलकत्वं स्वर्गकामोऽग्निहोत्रं जुहुयादित्यादिश्रुतिष्ववगतम्। स्वर्गश्च, यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरं। अभिलाषोपनीतं यत् तत् सुखं स्वःपदास्पदमित्युक्तलक्षणः सुखविशेषः। यस्मिन् शरीरे अणुमात्रमपि दुःखं न भवति, तस्मिन् शरीरे यः सुखविशेषो जायते सएव स्वर्ग इति वक्तुरर्थः। न चैष सुखविशेषोऽस्मिन् लोके सम्भवति। अस्मिन् लोके दुःखवर्ज्जनेन सुखभोगस्यासम्भवात्। तस्मात् स्वर्गादिफलं कालान्तरे भवतीत्यवश्यं वाच्यं। तत्र चाग्निहोत्रादिकं हेतुः शास्त्रप्रामाण्यात्। अग्निहोत्रादिकञ्च क्रियात्वमुत्पन्नप्रध्वंसि न स्वर्गकालमवतिष्ठते। न च तत्काले अनवस्थितात् कारणात् कार्य्योत्पत्तिः। तस्मादग्निहोत्रादिजन्यः कश्चन व्यापारः स्वर्गपर्य्यन्तस्थायी स्वीकर्त्तव्यः। तेन व्यापारेण चिरविनष्टस्याप्यग्निहोत्रादेः स्वर्गहेतुत्वमुपपद्यते। दृश्यते हि चिरातीतस्यानुभवस्य स्वजन्यसंस्कारद्वारा कालान्तरे स्मृतिहेतुत्वम्। स चाग्निहोत्रादिजन्यो व्यापारोऽदृष्टमिति धर्म्म इति पुण्यमिति चाख्यायते। तच्च पुण्यमचेतनं चेतनस्याधिष्ठानमन्तरेण न फलजनकं, रथशकटादौ सर्व्वत्र चेतनाधिष्ठितानामेवाचेतनानां फलजनकत्वदर्शनात्। न च जीवात्मनां चेतनानामप्यदृष्टाधिष्ठातृत्वं सम्भवति। यो हि यदधितिष्ठति स तद्गोचरापरोक्षज्ञानवान् भवति। वास्यादिगोचरापरोक्ष-

ज्ञानवान् हि तक्षादिर्वास्यादिकमधितिष्ठन् दृश्यते। न च जीवात्मनाम-दृष्टगोचरापरोक्षज्ञानमस्ति। अदृष्टस्यातीन्द्रियत्वात्। तस्मात् यः पुरुष-धौरेयोऽदृष्टगोचरापरोक्षज्ञानवानदृष्टमधितिष्ठति स एवेश्वर इत्यदृष्टा-धिष्ठातृतयेश्वरसिद्धिः। एवं वेदकर्त्तृतया क्षित्यादिकर्त्तृतया चेश्वरसिद्धि-रिति नैयायिकानां मतम्।

तत्र चार्व्वाकादीनामित्थं प्रत्यवस्थानं। चार्व्वाकास्तावन्मन्यन्ते। यद्य-दृष्टं नाम तिष्ठेत्, तदा तदधिष्ठातृतयेश्वरसिद्धिर्भवितुमर्हति। तदेव तु नास्ति प्रमाणाभावात्। न ह्यदृष्टं प्रत्यक्षं येन तत्स्वीकारः सम्भवति। न चानुमानाददृष्टसिद्धिः सम्भवति। अनुमानस्याप्रमाणत्वात्। सर्व्वत्र व्यभि-चारसंशयेन, अव्यभिचरितसम्बन्धज्ञानाधीनस्यानुमानस्यासम्भवात्। अनुमा-नस्याप्रामाण्ये च तदधीनसङ्केतग्रहाधीनबोधजनकस्य शब्दस्यापि नास्ति प्रामाण्यं। आत्माऽपि नाम देहातिरिक्तः कश्चिन्नास्ति यस्य परलोके स्वर्गा-दिभोगः स्यात्। किन्तु देह एवात्मा तस्यैव चैतन्यमिति। तदेतन्मतं स्थूलतः प्रथमस्तवके निराकृतम्।

मीमांसकास्तु मन्यन्ते। नित्य एव वेदो न केनचित्कृत इति न वेदकर्त्तृ-तयेश्वरसिद्धिर्भवितुमर्हति। वेदस्य नित्यत्वञ्च य एव वेदो देवदत्तेनाधीतः स एव मैत्रेणाप्यधीयते इति प्रत्यभिज्ञानबलात् सिध्यति। किं बहुना, स एवायं गकार इत्यादिप्रत्यभिज्ञाबलाद्वर्णानामपि नित्यत्वं। तत्कुतो वेदस्य कर्त्ता सम्भवति इति। तदेतन्मीमांसकमतं द्वितीयस्तवके निराकृतम्।

सौगतास्तु मन्यन्ते। प्रत्यक्षानुपलम्भबाधिते तावदनुमानं न प्रवर्त्तते इति नैयायिकैरपि स्वीक्रियते। तथाच ईश्वरस्य प्रत्यक्षानुपलम्भबाधितत्वान्नानु-मानेनेश्वरसिद्धिः सम्भवति। अपि च यो हि कर्त्ता भवति स शरीरी भवति इति लोके दृष्टं। ईश्वरस्त्वशरीरी नैयायिकैर्मन्यते। तस्मात् शरीराभावान्नेश्वरः कर्त्ता भवितुमर्हतीति कुतः क्षित्यादिकर्त्तृत्वेनेश्वरसिद्धिः। एवं यो हि किञ्चित् करोति स किञ्चित् प्रयोजनमभिसन्धायैव प्रवर्त्तते। ईश्वरस्त्वाप्तकामो नैयायिकैरिष्यते। न चाप्तकामस्य किञ्चित् प्रयोजनं सम्भ-

वति, यदभिसन्धाय स कर्त्ता भवेदिति। तदेवत् सौगतमतं तृतीयस्तवके निराकृतम्।

दिगम्बरास्तु मन्यन्ते। नैयायिकाभिमतस्येश्वरस्य न प्रमाणत्वं। प्रमाणपदं हि यदा करणे व्युत्पन्नं तदा प्रमाकरणबोधकं, यदा तु कर्त्तरि व्युत्पन्नं तदा प्रमाकर्त्तृबोधकं। ईश्वरस्तावन्न प्रमाकरणं अस्मदादिप्रमायामीश्वरस्य करणत्वे मानाभावात्। ईश्वरस्य च ज्ञानं नित्यं सर्व्वविषयञ्च नैयायिकैरङ्गीक्रियते। न च नित्यस्य वस्तुनः करणं कर्त्ता वा सम्भवति। अतईश्वरः स्वज्ञानस्यापि करणं कर्त्ता वा न भवितुमर्हति। न वा ईश्वरस्य ज्ञानं प्रमा। यद्धि ज्ञानं अज्ञाते विषये जायते सैव प्रमा। अतएव स्मरणात्मकं ज्ञानं पूर्व्वानुभूते विषये भवति इति स्मृतिर्न प्रमा। ईश्वरस्य च सर्वज्ञस्याज्ञातो विषयो नास्ति, यस्मिन् विषये तस्य ज्ञानं प्रमाभवेत्। तस्मादीश्वरज्ञानं न प्रमा, नापीश्वरः प्रमाणं। तथा चाप्रमाणपुरुषस्य वचसि का श्रद्धेति। तदेतन्मतं चतुर्थस्तवके निराकृतम्।

साङ्ख्यास्तु मन्यन्ते। ईश्वरे प्रमाणमेव नास्ति। न हि जगत्कर्त्तृतयेश्वरानुमानं सम्भवति। प्रकृतेरेव जगत्कर्त्तृत्वात्। वेदोऽपीश्वरसद्भावे न प्रमाणं तस्योपासनादिविधिपरत्वेन स्वार्थे तात्पर्य्याभावादिति। तदेतत् साङ्ख्यमतं पञ्चमस्तवके निराकृतम्। स्तवकान्तरेष्वपि प्रसङ्गादेतेषां मतानां किञ्चित् किञ्चित् निराकरणमस्ति।

निराकरणप्रकारोऽपि संक्षेपेण किञ्चित् प्रदर्श्यते। चार्व्वाकानां निराकरणं तावत्। इह खलु जगति न सर्व्वो जनः समानः। कश्चित् सुखी कश्चिद्दुःखी इत्येवमादिकं वैचित्र्यं जगति बहुलमुपलभ्यते। न च कारणमन्तरेण वैचित्र्यं शक्यं वक्तुं। वैचित्र्यस्य कार्य्यतया कारणजन्यत्वनियमात्। न च दृष्टं किञ्चित् कारणं तत्रास्तीत्यवश्यमदृष्टं कारणं वाच्यं। एवं बहुवित्तव्ययायाससाध्ये वैदिके कर्म्मणि प्रेक्षावतां प्रवृत्तिरपि न सम्भवति यद्यदृष्टं नाम न स्यात्। न हि तैः कर्म्मभिर्दृष्टं किञ्चित् फलं क्रियते। न च लाभख्यातिसम्मानाद्यर्थं धर्म्माचरणमित्यपि शक्यते वक्तुं। लाभादिनिरपे-

द्वैरपि गिरिगुहारण्यादौ निर्जनस्थानेऽपि तदाचरणात्। धर्म्माभावे धर्म्माचरणात् लाभादिकमपि न सम्भवति। धर्म्मबुद्ध्या हि लोको धार्म्मिकेभ्यो धनं ददाति। इतरथा बह्वायासोपार्जितस्य धनस्य त्यागानुपपत्तेः। न च कश्चित् प्रतारकः स्वर्गादिफलकतया यागादिकं परिकल्प्य परेषां विश्वासार्थं स्वयमपि तदनुष्ठितवान् ततस्तेन प्रतारित एव लोको यागादौ प्रवर्त्तते इत्यपि कल्पयितुं शक्यते। को हि नाम जन्तुरेवं भवेत् यः परप्रतारणार्थं बह्वायासार्ज्जितस्य धनस्य अस्थान एव व्ययं करोति उपवासादिभिश्चात्मानं क्लिश्नाति। न ह्येतावतो दुःखराशेः परप्रतारणसुखं गरीयः।

अनुमानमपि प्रमाणमेव। व्यभिचारसंशयेन हि तस्याप्रामाण्यमुच्यते। व्यभिचारसंशयश्चानुमानाधीन एव। एकमुदाहरणमवलम्ब्यैतद्विशदीक्रियते। वह्निमान् धूमादित्येकमुदाहरणमनुमानस्य। धूमो हि न वह्निं व्यभिचरति। अतो धूमेन वह्निरनुमीयते। तत्र वह्निधूमयोर्व्यभिचारसंशयेनानुमानस्याप्रामाण्यमभिमन्यते। तत्रेदं वक्तव्यम्। दृष्टयोस्तावद्वह्निधूमयोः प्रत्यक्षेणोपलम्भान्न व्यभिचारसंशयः सम्भवति। किन्त्वदृष्टयोस्तयोः कालान्तरे देशान्तरे वा व्यभिचारशङ्का स्यात्। कालान्तरस्थयोर्देशान्तरस्थयोश्च वह्निधूमयोर्ज्ञानन्तु न प्रत्यक्षेण किन्त्वनुमानेनैव। तस्मात् सिद्धं प्रत्यक्षातिरिक्तमनुमानमपि प्रमाणम्। व्यभिचारसंशयेन हेतोर्न साधकत्वमित्यप्यनुमानेऽसति वक्तुमशक्यम्।

यदि देह एवात्मा स्यात् तदा बाल्येऽनुभूतस्य वार्द्धके स्मरणं न स्यात्। बाल्यवार्द्धकयोः शरीरभेदात्। न खल्वन्येन दृष्टमन्यः स्मरतीत्येवमादिकारणैरात्माऽपि देहव्यतिरिक्तोऽङ्गीकर्त्तव्य इति।

मीमांसकानां निराकरणन्तु, वेदोऽपि न नित्यः किन्तु इतरवाक्यवदेव जन्यः वाक्यत्वादेव। वाक्यञ्च वक्तुर्भ्रमप्रमादादिदोषबलादप्रमाणं भवति। वेदवाक्यञ्च प्रेक्षावद्भिर्महाजनैः परिगृहीतत्वात् प्रमाणम्। अतस्तद्वक्ता भ्रमादिशून्य एव सिध्यति। स एव भगवानीश्वरः। गकारादयो वर्णा अपि न नित्याः, उत्पन्नो गकारः, विनष्टो गकारः, श्रुतपूर्व्वो गकारो नास्तीति

प्रत्यक्षत एव तदुत्पत्तिविनाशयोरनुभवात्। एवञ्च श्रुतीनामुत्पत्तिविनाशित्वस्य प्रत्यक्षसिद्धत्वात् स एवायं गकार इत्यादि प्रत्यभिज्ञा गत्वादिजातिविषयिणी वक्तव्या। सैवेयं दीपशिखेतिवत् छिन्नपुनर्जातकेशादौ त एवामी केशा इत्यादिवच्च।

सौगतमतनिराकरणमित्थम्। प्रत्यक्षानुपलम्भबाधिते अनुमानं न प्रवर्त्तते इति सत्यं, परन्तु उपलम्भयोग्यस्यानुपलम्भेनाभावनिश्चयो न त्वनुपलम्भमात्रेणाभावनिश्चयः। तथात्वेऽतीन्द्रियाणामाकाशादीनामप्यभावः स्यात्। ईश्वरस्तु न प्रत्यक्षोपलम्भयोग्य इति प्रत्यक्षानुपलम्भादीश्वराभाव इत्ययुक्तम्। कस्मिंश्चिदाश्रये कस्यचिदनुमानं भवति। यथा पर्व्वते वह्नेः। शरीराभावात् प्रयोजनाभावाच्च ईश्वरे कर्तृत्वाभावानुमाने आश्रयस्येश्वरस्याङ्गीकारप्रसङ्गः। तदनङ्गीकारे कुत्र कर्तृत्वाभावानुमानम्? योहि कर्त्ता भवति, तेनावश्यं शरीरिणैव भवितव्यमित्यत्रापि प्रमाणं नास्ति। विपक्षे बाधकाभावात्। यत्र धूमस्तत्रावश्यं वह्निना भवितव्यमित्यत्र तु वह्निधूमयोः कार्य्यकारणभाव एव विपक्षबाधकः। ईश्वरस्य निजप्रयोजनाभावेऽपि भूतानुग्रहः प्रयोजनम्।

दिगम्बरमतनिराकरणमेवम्। ईश्वरज्ञानस्य नित्यत्वेऽपि तदाश्रय ईश्वरो भवत्येव। क्रियाश्रयस्यैव कर्तृत्वात्। सुतरामीश्वरः प्रमाणं कर्तृव्युत्पन्नप्रमाणशब्दस्य प्रमाकर्त्तरि प्रवृत्तेः। अज्ञातविषये यत् ज्ञानं जायते सैव प्रमा इत्यपि न। एकविषयकधारावाहिकबुद्धीनामुत्तरासामप्रमात्वप्रसङ्गात्। शुक्तिकायामिदं रजतमिति भ्रमज्ञानस्यापि प्रमात्वप्रसङ्गाच्च। किन्तु यथार्थोऽनुभवः प्रमा इत्येव प्रमालक्षणम्। स्मृतिस्तु नानुभव इति नासौ प्रमा। ईश्वरज्ञानन्तु यथार्थमनुभवश्चेति तत्प्रमा भवत्येव।

साङ्ख्यमतनिरासस्तु। यथा घटादिकार्य्यं कर्तृजन्यं तथा क्षित्यादिकार्य्यमपि। यश्च क्षित्यादिकर्त्ता स एवेश्वरः। न च प्रकृतिः कर्त्री सम्भवति। जडायाः प्रकृतेः कर्तृत्वासम्भवात्। कर्त्तुश्चैतन्यनियमात्। एवं सर्गाद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म्मापि ईश्वरप्रयत्नादेव जायते कर्म्मणां चेतनप्रयत्नजन्यत्वनियमात्। ईश्वरमुपासीतेत्यादिवेदवाक्या-

न्यपि ईश्वरसद्भावे प्रमाणम् । तत्रेश्वरादिपदं स्वार्थद्वारैव विधिपरम् । यथा स्वर्गकामो यजेतेत्यत्र स्वर्गपदं स्वार्थद्वारा विधिपरं तद्वत् । अन्यथा स्वर्गेऽप्यनाश्वासः स्यात् ।

ग्रन्थेऽस्मिन्नन्येऽपि बहवोऽर्था विचारिताः । तद्यथा । प्रथमस्तवके तावत्, कार्य्यकारणभावव्यवस्थापनं, कार्य्यकारणप्रवाहस्यानादित्वं, आकस्मिकत्ववादखण्डनं, मीमांसकाभिमतशक्तिपदार्थखण्डनं, ब्रह्मकारणवादनिराकरणं, प्रकृतिकारणवादखण्डनं, अदृष्टस्य भोक्तृनिष्ठत्वं, अभावस्य कारणत्वव्यवस्थापनं, बुद्धेः कर्तृत्वनिराकरणं, आत्मनः कर्तृत्वव्यवस्थापनं, क्षणभङ्गवादनिराकरणं, कारणत्वस्य स्वाभाविकत्वौपाधिकत्वविचारः, नित्यविभोरपि कारणत्वव्यवस्थापनं इत्येतेऽर्थाविचारिताः ।

प्रमाया गुणजन्यत्वव्यवस्थापनं, प्रलयव्यवस्थापनं, वेदादिसंप्रदायस्य क्रमिकह्रासव्यवस्थापनं इत्येतानि द्वितीयस्तवके चिन्तितानि ।

अलीकस्य नाभावप्रतियोगित्वं न चाभावाधिकरणत्वमिति निरूपणं, योग्यानुपलब्धिनिरूपणं, ईश्वरबाधकानुमानखण्डनं, अनुमानप्रामाण्याभावेऽपि सम्भावनामात्रात् प्रवृत्तिरिति चार्व्वाकमतखण्डनं, अनुमानप्रामाण्यव्यवस्थापनं, तर्कस्य शङ्कानिवर्त्तकत्वकथनं, सादृश्यस्य पदार्थान्तरत्वखण्डनं, मीमांसकाभिमतोपमानखण्डनं, स्वमते उपमाननिरूपणं, उपमानस्य प्रमाणान्तरत्वव्यवस्थापनं, शब्दस्यानुमानत्वखण्डनं, लौकिकशब्दो न प्रमाणमिति प्रभाकरमतखण्डनं, शब्दस्य प्रमाणान्तरत्वव्यवस्थापनं, अर्थापत्तेः प्रमाणान्तरत्वखण्डनं, अनुपलब्धेः प्रमाणान्तरत्वखण्डनं इत्येतेऽर्थास्तृतीयस्तवके व्युत्पादिताः ।

प्रमालक्षणं, ज्ञातताखण्डनं, ज्ञानस्य विषयव्यवस्थोपपादनं, प्रमात्वप्रामाण्ययोर्निरूपणमित्येते चतुर्थस्तवकगताः ।

पञ्चमस्तवके तु, वेदस्य पौरुषेयत्वव्यवस्थापनं, ईश्वरबाधकानुमानापेक्षया साधकानुमानस्य बलवत्त्वव्यवस्थापनं, तत्रानुकूलतर्ककथनं, प्रतिकूलतर्काणामाभासत्वव्यवस्थापनं, विधिपदार्थनिरूपणं, प्रवर्त्तकज्ञानविचारः, भावनापदार्थनिरूपणं, आख्यातस्य यत्नार्थकत्वनिरूपणं, कृत्स्नस्य वेदस्येश्वरपरत्वमित्येते

सम्भाव्यते, अत एव स्मृतिमैथिल्यात् पञ्चमस्तवके उद्देश्य एव तात्पर्य्यमिति मूलस्यैव कारिका तदुक्तमित्यन्योक्तिप्रकारेण तेनोद्धृता। अन्यच्चापि क्वचित् किञ्चित् व्याख्यावैलक्षण्यं जातम्। कारिकात्मककुसुमाञ्जलेरुपरि नवद्वीपनिवासिना रामभद्रसार्व्वभौमेनाप्येका टीका विरचिता। तत्र चोद्देश्य एव तात्पर्य्यमित्यादिकारिका मूलकारिकातयैवोद्धृता वर्त्तते। एवं तत्र मूलस्थं गद्यमपि क्वचित् क्वचिदुद्धृतमस्ति। ततोऽनुमीयते तदानीं गद्यपद्यात्मकस्य कुसुमाञ्जलिप्रकरणस्य वङ्गदेशेऽपि कियान् प्रचारोजात इति। तार्किकशिरोमणिरघुनाथशिरोमणीनां प्रादुर्भावकालादारभ्य वङ्गदेशस्य प्राधान्यं मिथिलाप्रदेशस्य प्राधान्यविलोपश्च न्यायचर्च्चायामासीत्। तस्मादारभ्य न्यायाध्ययनेच्छवो मिथिलादेशीया वङ्गदेशमागत्याद्यपर्य्यन्तं न्यायाध्ययनं कुर्व्वन्ति। अतो रघुनाथशिरोमणिभ्यः परवर्त्तिनो रामभद्रसार्व्वभौमस्य समये कुसुमाञ्जलिप्रकरणस्य वङ्गदेशे प्रचारः सम्भाव्यतएव। हरिदासभट्टाचार्य्यकृतव्याख्यासमेतस्य कुसुमाञ्जलिप्रकरणस्यपद्यांशस्य स्वल्पग्रन्थत्वात् मूलग्रन्थसारांशत्वात् मूलग्रन्थापेक्षया सुगमत्वाच्च मूलग्रन्थमनधीत्य स एव ग्रन्थः सर्व्वैरन्तेवासिभिरध्येतुमारब्धः। तदेवं क्रमेण देशान्तरेष्वपि मूलग्रन्थस्याध्ययनमध्यापनञ्च लुप्तकल्पं जातम्। सुतरां ग्रन्थोऽपि लुप्तकल्प एव जातः।

तमिममुपादेयं ग्रन्थं लुप्तकल्पमालोचयद्भिरैतद्देशीयग्रन्थरत्नरक्षाबद्धपरिकरैर्विद्यानुरागिभिरस्यातिकसमाजविद्वद्भिरस्य मुद्रया प्रचारं कर्त्तव्यं निश्चित्य शोधनमुद्रणायाहमनुरुद्धः। मयाऽप्यस्य शोधनाय यथामति कृतः प्रयत्नः। तथाप्यनवधानादिना यद्यत्र किञ्चिदशुद्धमुपलभ्येत तद्विद्वद्भिः कृपया शोधनीयमिति कृतोऽयमञ्जलिः। यस्याः समितेरिच्छामात्रेण लुप्तकल्पोऽयमुत्तमो ग्रन्थः कायव्यूहमिदानीं वहति, सेयं समीचीना समितिरीदृशानि रत्नानि रक्षन्ती चिरं जीवतादीश्वरानुग्रहेणेति मनसा प्रार्थयामहे।

यानि पुस्तकान्यवलम्ब्याहमेतस्य शोधनमकरवम्, तान्युच्यन्ते। एवं

तावदस्मल्लिखितं सम्पूर्णं मूलमात्रम्। अन्यत् शान्तिपुरनिवासिश्रीयुक्त रामनाथतर्करत्नभट्टाचार्य्यात् क्रीतं सम्पूर्णं मूलमात्रम्। अपरं काशीतः क्रीतं मूलमात्रमेव शेषे किञ्चित् खण्डितम्। अपरमपि नवद्वीपनिवासि हरिनाथतर्कसिद्धान्तभट्टाचार्य्यसकाशादानीतं मूलं शेषे किञ्चित् खण्डितमेव। इतरमूलपुस्तकं संस्कृतविद्यालयात् प्राप्तमसम्पूर्णम्। तदेवं मूलस्य पञ्च पुस्तकानि लब्धानि।

प्रकाशस्याप्येकं पुस्तकं सम्पूर्णं समीचीनञ्च तालपत्रलिखितमस्यातिकसमाजात् प्राप्तम्। अन्यत् रामनाथतर्करत्नभट्टाचार्य्यादासादितम्। अपरं हरिनाथतर्कसिद्धान्तभट्टाचार्य्यादानीतं प्रायः सम्पूर्णम्। इतरत् संस्कृतविद्यामन्दिरात् संगृहीतमसम्पूर्णम्। अन्यत् काशीतः क्रीतमसम्पूर्णम्। अपरं काशीसंस्कृतविद्यालयाध्यक्षात् आनीतं तालपत्रलिखितं समीचीनमसम्पूर्णम्। तदेवं प्रकाशस्य षट् पुस्तकानि लब्धानि।

मकरन्दस्यैकं पुस्तकं रामनाथतर्करत्नात् प्राप्तम्। अपरं हरिनाथतर्कसिद्धान्तभट्टाचार्य्यादधिगतम्। अन्यत् काशीसंस्कृतविद्यामन्दिरस्थन्यायशास्त्राध्यापकश्रीयुक्तकैलासचन्द्रशिरोमणिभट्टाचार्य्यात् समानीतम्। तदेवं मकरन्दस्य त्रीणि पुस्तकानि लब्धानि। एतानि सर्व्वाण्येव सम्पूर्णानि समीचीनानि च।

प्रकाशग्रन्थः मूलस्य समीचीनव्याख्यारूपो वर्द्धमानप्रणीतः। मकरन्दग्रन्थस्तु प्रकाशस्य व्याख्यारूपः समीचीनः सङ्क्षिप्तः सारगर्भश्च रुचिदत्तप्रणीतः।

एतस्य मुद्रापणे प्रवृत्तेन मया प्रथमतः प्रकाशसहितं मूलमेव मुद्रयितुमारब्धम्। स्थाने स्थाने टिप्पण्यां दत्तं मकरन्दसन्दर्भश्च निवेशितः। परन्तु प्रकाशस्यार्थवैमल्याय नातिविस्तरः सारगर्भोऽप्युपादेयो मकरन्दसन्दर्भोऽप्यवश्यं मुद्रणमर्हतीत्यालोचयता मया तन्मुद्रणाय स्वर्गतो राजा राजेन्द्रलालमित्रो व्यज्ञापि। तेन चानुमोदिते तन्मुद्रणे ४९ पृष्ठतः प्रभृति यथारीति मकरन्दसन्दर्भोऽपि प्रकाशस्याधस्तान्मुद्रापितः। एवं गते मकरन्दसन्दर्भस्य पूर्णतायै प्रथमोऽंशः पश्चात् पृथङ्मुद्रापितः। मकरन्दसन्दर्भस्य

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# Asiatic Society of Bengal,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS. LUZAC & CO.

46 Great Russell Street, London, W. C., and Mr. Otto Harrassowitz, Bookseller, Leipzig, Germany.

***Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.***

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | | |
|---|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1–4 @ /6/ each ... | Rs. | 1 | 8 |
| *Agni Puráṇa, (Text) Fasc. 2–14 @ /6/ each ... ... ... | | 4 | 14 |
| Aitareya Áraṇyaka of the Rig Veda, (Text) Fasc. 1–5 @ /6/ each ... | | 1 | 14 |
| Aitareya Brahmana, Fasc. 1–4 @ /6/ ... ... ... | | 1 | 8 |
| Aṇu Bháshyam, (Text) Fasc. 1–2 ... ... ... ... | | 0 | 12 |
| Aphorisms of Sáṇḍilya, (English) Fasc. 1 ... ... ... | | 0 | 6 |
| Ashtasáhasriká Prajnapáramitá, (Text) Fasc. 1–6 @ /6/ each ... | | 2 | 4 |
| Aśvavaidyaka, (Text) Fasc. 1–5 @ /6/ each ... ... ... | | 1 | 14 |
| Avadána Kalpalatá, (Sans. and Tibetan) Vol. I, Fasc. 1–4; Vol. II. Fasc. 1–3 @ 1/ ... ... ... ... ... ... | | 7 | 0 |
| *Bhámati, (Text) Fasc. 2–8 @ /6/ each ... ... ... | | 2 | 10 |
| Brahma Sútra, (English) Fasc. 1 ... ... ... ... | | 0 | 12 |
| Brihaddevata (Text) Fasc. 1–4 @ /6/ each ... ... ... | | 1 | 8 |
| Brihadharma Puráṇa, (Text) Fasc. 1–5 @ /6/ each ... ... | | 1 | 14 |
| Brihataranyaka Upanishad (English) Fasc. 2–3 @ /6/ each ... | | 0 | 12 |
| Chaitandya-Chandrodaya Náṭaka, (Text) Fasc. 2–3 @ /6/ each ... | | 0 | 12 |
| *Chaturvarga Chintamaṇi (Text) Vols. II, 1–25; III. Part I, Fasc. 1–18. Part II, Fasc. 1–9 @ /6/ each ... ... ... | | 19 | 8 |
| *Chhándogya Upanishad, (English) Fasc. 2 ... ... ... | | 0 | 6 |
| *Hindu Astronomy, (English) Fasc. 2–3 @ /6/ each ... ... | | 0 | 12 |
| Kála Mádhaba, (Text) Fasc. 1–4 @ /6/ each ... ... ... | | 1 | 8 |
| Kátantra, (Text) Fasc. 1–6 @ /12/ each ... ... ... | | 4 | 8 |
| Kathá Sarit Ságara, (English) Fasc. 1–14 @ /12/ each ... ... | | 10 | 8 |
| Kúrma Purana, (Text) Fasc. 1–9 @ /6/ each ... ... ... | | 3 | 6 |
| *Lalita-Vistara, (Text) Fasc. 3–6 @ /6/ each ... ... ... | | 1 | 8 |
| Ditto (English) Fasc. 1–3 @ /12/ each ... ... | | 2 | 4 |
| Madana Párijáta, (Text) Fasc. 1–11 @ /6/ each... ... ... | | 4 | 2 |
| Manutiká Sangraha, (Text) Fasc. 1–3 @ /6/ each ... ... | | 1 | 2 |
| *Márkaṇḍeya Puráṇa, (Text) Fasc. 4–7 @ /6/ each ... ... | | 1 | 8 |
| Márkaṇḍeya Puráṇa, (English) Fasc. 1–3 @ /12 /each ... ... | | 2 | 4 |
| *Mimáṃsá Darṣana, (Text) Fasc. 3–19 @ /6/ each ... ... | | 6 | 2 |
| Nárada Smṛiti, (Text) Fasc. 1–3 @ /6/ ... ... ... | | 1 | 2 |
| Nyayavártika, (Text) Fasc. 1–2 ... ... ... ... | | 0 | 12 |
| *Nirukta, (Text) Vol. I, Fasc. 4–6; Vol. II, Fasc. 1–6; Vol. III, Fasc. 1–6; Vol. IV, Fasc. 1–8 @ /6/ each ... ... ... | | 8 | 14 |
| *Nítisára, or The Elements of Polity, By Kámandaki, (Sans.) Fasc. 2–5 @ /6/ each ... ... ... ... ... | | 1 | 8 |
| Nyayabindutika, (Text) ... ... ... ... ... | | 0 | 10 |
| Nyaya Kusumánjali Prakarana (Text) Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–2 @ /6/ each ... ... ... ... ... | | 3 | 0 |
| Pariśishṭa Parvan, (Text) Fasc. 1–5 @ /6/ each... ... ... | | 1 | 14 |

# THE NYAYA-KUSUMANJALI PRAKARANAM

BY UDAYANA'CHA'RYA

## FIRST PART

CONTAINING

THE 1ST, 2ND AND 3RD STAVAKAS

WITH THE COMMENTARY OF

VARDDHAMA'NA AND THE GLOSS OF RUCHIDATTA.

EDITED BY

MAHA'MAHOPA'DHYA'YA CHANDRAKA'NTA TARKA'LANKA'R.

---

*FOR THE BIBLIOTHECA INDICA.*

---

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS.

1891.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# Asiatic Society of Bengal,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS. LUZAC & CO.

46 Great Russell Street, London, W. C., and Mr. Otto Harrassowitz, Bookseller, Leipzig, Germany.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | |
|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1–4 @ /6/ each ... | Rs. 1 | 8 |
| *Agni Puráṇa, (Text) Fasc. 2–14 @ /6/ each ... ... ... | 4 | 14 |
| Aitareya Áraṇyaka of the Rig Veda, (Text) Fasc. 1–5 @ /6/ each ... | 1 | 14 |
| Aitareya Brahmana, Fasc. 1–4 @ /6/ ... ... ... | 1 | 8 |
| Aṇu Bháshyam, (Text) Fasc. 1–2 ... ... ... ... | 0 | 12 |
| Aphorisms of Sáṇḍilya, (English) Fasc. 1 ... ... ... | 0 | 6 |
| Ashtasáhasriká Prajnapáramitá, (Text) Fasc. 1–6 @ /6/ each ... | 2 | 4 |
| Aśvavaidyaka, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Avadána Kalpalatá, (Sans. and Tibetan) Vol. I, Fasc. 1–4; Vol. II. Fasc. 1–3 @ 1/ ... ... ... ... ... ... | 7 | 0 |
| *Bhámati, (Text) Fasc. 2–8 @ /6/ each ... ... ... | 2 | 10 |
| Brahma Sútra, (English) Fasc. 1 ... ... ... ... | 0 | 12 |
| Brihaddevata (Text) Fasc. 1–4 @ /6/ each ... ... ... | 1 | 8 |
| Brihadharma Puráṇa, (Text) Fasc. 1–5 @ /6/ each ... ... | 1 | 14 |
| Brihataranyaka Upanishad (English) Fasc. 2–3 @ /6/ each ... | 0 | 12 |
| Chaitandya-Chandrodaya Náṭaka, (Text) Fasc. 2–3 @ /6/ each ... | 0 | 12 |
| *Chaturvarga Chintamaṇi (Text) Vols. II, 1–25; III. Part I, Fasc. 1–18. Part II, Fasc. 1–9 @ /6/ each ... ... ... | 19 | 8 |
| *Chhándogya Upanishad, (English) Fasc. 2 ... ... ... | 0 | 6 |
| *Hindu Astronomy, (English) Fasc. 2–3 @ /6/ each ... ... | 0 | 12 |
| Kála Mádhaba, (Text) Fasc. 1–4 @ /6/ each ... ... ... | 1 | 8 |
| Kátantra, (Text) Fasc. 1–6 @ /12/ each ... ... ... | 4 | 8 |
| Kathá Sarit Ságara, (English) Fasc. 1–14 @ /12/ each ... ... | 10 | 8 |
| Kúrma Purana, (Text) Fasc. 1–9 @ /6/ each ... ... ... | 3 | 6 |
| *Lalita-Vistara, (Text) Fasc. 3–6 @ /6/ each ... ... ... | 1 | 8 |
| Ditto (English) Fasc. 1–3 @ /12/ each ... ... | 2 | 4 |
| Madana Párijáta, (Text) Fasc. 1–11 @ /6/ each... ... ... | 4 | 2 |
| Manutiká Sangraha, (Text) Fasc. 1–3 @ /6/ each ... ... | 1 | 2 |
| *Márkaṇḍeya Puráṇa, (Text) Fasc. 4–7 @ /6/ each ... ... | 1 | 8 |
| Márkaṇḍeya Puráṇa, (English) Fasc. 1–3 @ /12 /each ... ... | 2 | 4 |
| *Mimáṃsá Darṣana, (Text) Fasc. 3–19 @ /6/ each ... ... | 6 | 6 |
| Nárada Smṛiti, (Text) Fasc. 1–3 @ /6/ ... ... ... | 1 | 2 |
| Nyayavártika, (Text) Fasc. 1–2 ... ... ... ... | 0 | 12 |
| *Nirukta, (Text) Vol. I, Fasc. 4–6; Vol. II, Fasc. 1–6; Vol. III, Fasc. 1–6; Vol. IV, Fasc. 1–8 @ /6/ each ... ... ... | 8 | 10 |
| *Nítisára, or The Elements of Polity, By Kámandaki, (Sans.) Fasc. 2–5 @ /6/ each ... ... ... ... ... | 1 | 8 |
| Nyayabindutika, (Text) ... ... ... ... ... | 0 | 10 |
| Nyáya Kusumánjali Prakarana (Text) Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–2 @ /6/ each ... ... ... ... | 3 | 0 |
| Pariśishṭa Parvan, (Text) Fasc. 1–5 @ /6/ each... ... ... | 1 | 14 |

THE

# NYAYA-KUSUMANJALI PRAKARANAM

BY UDAYANA'CHA'RYA

## FIRST PART

CONTAINING

THE 1ST, 2ND AND 3RD STAVAKAS

WITH THE COMMENTARY OF

VARDDHAMA'NA AND THE GLOSS OF RUCHIDATTA.

EDITED BY

MAHA'MAHOPA'DHYA'YA CHANDRAKA'NTA
TARKA'LANKA'R.

---

*FOR THE BIBLIOTHECA INDICA.*

---

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS.

1891.

# THE NYĀYA-KUSUMĀÑJALI PRAKARAṆAM

BY UDAYANĀCARYA

## SECOND PART

CONTAINING

THE 4TH AND 5TH STAVAKAS

WITH THE COMMENTARY OF

RUCIDATTA AND THE GLOSS OF VARDDHAMANA

EDITED BY

BANDYAGHAṬĪA
MAHĀMAHOPĀDHYĀYA CANDRAKĀNTA
TARKĀLAṄKĀRA

*FOR THE BIBLIOTHECA INDICA.*

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS.
1895.

# न्यायकुसुमाञ्जलिप्रकरणम्।

## (चतुर्थ-पञ्चम-स्तवकात्मकद्वितीयखण्डम्)



न्यायाचार्य्यपदाङ्कित-महामहोपाध्याय-

श्रीमदुदयनाचार्य्यविरचितम्।



महामहोपाध्याय-रुचिदत्तकृत-मकरन्दोल्लासित-

महामहोपाध्याय-वर्द्धमानकृत-प्रकाशसमेतम्।

---

वङ्गदेशीय-

श्रीश्री एशियातिकसमाजानुमत्या

वन्द्यघटीय-

महामहोपाध्याय-

श्रीचन्द्रकान्ततर्कालङ्कार-परिशोधितम्।



कलिकाता-महानगर्य्यां

बाप्टिष्ट मिशन् यन्त्रे मुद्रितम्।

शकाब्दाः १८१९।

# अनुक्रमणिका ।

न्यायकुसुमाञ्जलिप्रकरणमिदमुदयनाचार्य्यविरचितमुदारार्थमतीवोपादेयो ग्रन्थः । बौद्धाधिकापरनामधेयमात्मतत्त्वविवेकं विरचय्य प्रकरणमिदं रचितवानाचार्य्यः । एतद्ग्रन्थे आत्मतत्त्वविवेकस्योल्लेखदर्शनेन ततः पराचीनत्वमेतस्य सुव्यक्तमवगम्यते । आत्मतत्त्वविवेके तावद्बौद्धानां क्षणभङ्गादिवादान्निराकृत्य विज्ञानादतिरिक्तः स्थायी जीवात्मा निरूपितः । न्यायकुसुमाञ्जलिप्रकरणे तस्मिन् यस्योपासनया जीवात्मा निःश्रेयसमधिगच्छति, स भगवानीश्वरः परमात्मपदाभिधेयः सविस्तरं व्यवस्थापितः । अत्रत्या चेश्वरानुमानप्रणाली समीचीना सत्तर्कगर्भा च । इमामेव प्रणालीमनुसृत्य गङ्गेश्वर ईश्वरानुमानचिन्तामणिं रचयाञ्चकार ।

सोऽयमत्युपादेयोऽपि ग्रन्थो नेदानीमध्ययनाध्यापनयोः प्रचरति । तत्कारणञ्च ग्रन्थस्य काठिन्येनाध्येतॄणामनुत्साहः । वङ्गदेशे तदप्रचारे कारणान्तरमप्यस्ति । इयं किल किंवदन्ती प्रचरति । पूर्व्वं किल मिथिलाप्रदेश एव बाहुल्येन समीचीना न्यायशास्त्रस्य चर्चाऽऽसीत् । गङ्गेशोपाध्यायादयो ग्रन्थकाराश्च बहवस्तत्र प्रादुरभवन् । तदानीं न्यायाध्ययनेच्छवो वङ्गदेशीया मिथिलाप्रदेशं गत्वा न्यायशास्त्राध्ययनमकार्षुः । मैथिलास्त्वध्यापकास्तानध्याप्य तेषां स्वदेशप्रतिगमनसमये तल्लिखितानि समीचीनानि न्यायपुस्तकानि बलादाक्षिप्य नयन्ति स्म । वङ्गदेशीयास्तावद्बुद्धिमन्तः, तत्र न्यायपुस्तकानां सौलभ्ये न्यायचर्चायां वङ्गदेशस्य प्राधान्यं भवेत् स्वदेशस्य प्राधान्यञ्च विलुप्येतेत्येवं शङ्कमानास्ते किलैवं चक्रुः । तदेवं गते वङ्गदेशीयाः केचित् कञ्चित् केचिच्च कञ्चित् ग्रन्थं कण्ठस्थं कृत्वा स्वदेशमागत्य लिलिखुः । एवं कालेन वङ्गदेशे न्यायग्रन्थानां सौलभ्यं जातम् । हरिदासभट्टाचार्य्यः कुसुमाञ्जलिप्रकरणस्य कारिकांशं गद्यस्यैकं कण्ठस्थं कृत्वा स्वदेशमागत्य यथास्मृति तद्व्याख्यानं कृतवान्—इति ।

सम्भाव्यते, अत एव स्मृतिशैथिल्यात् प्रथमस्तवके उद्देश एव तात्पर्य्यमिति मूलस्यैव कारिका तदुक्तमित्यन्योक्तिप्रकारेण तेनोद्धृता। अन्यत्रापि क्वचित् किञ्चित् व्याख्यावैलक्षण्यं जातम्। कारिकात्मककुसुमाञ्जलेरुपरि नवद्वीपनिवासिना रामभद्रसार्व्वभौमेनाप्येका टीका विरचिता। तत्र चोद्देश एव तात्पर्य्यमित्यादिकारिका मूलकारिकातयैवोद्धृता वर्त्तते। एवं तत्र मूलस्थं गद्यमपि क्वचित् क्वचिदुद्धृतमस्ति। ततोऽनुमीयते तदानीं गद्यपद्यात्मकस्य कुसुमाञ्जलिप्रकरणस्य वङ्गदेशेऽपि कियान् प्रचारोजात इति। तार्किकशिरोमणिरघुनाथशिरोमणीनां प्रादुर्भावकालादारभ्य वङ्गदेशस्य प्राधान्यं मिथिलाप्रदेशस्य प्राधान्यविलोपश्च न्यायचर्च्चायामासीत्। तस्मादारभ्य न्यायाध्ययनेच्छवो मिथिलादेशीया वङ्गदेशमागत्याद्यपर्य्यन्तं न्यायाध्ययनं कुर्व्वन्ति। अतो रघुनाथशिरोमणिभ्यः परवर्त्तिनो रामभद्रसार्व्वभौमस्य समये कुसुमाञ्जलिप्रकरणस्य वङ्गदेशे प्रचारः सम्भाव्यतएव। हरिदासभट्टाचार्य्यकृतव्याख्यासमेतस्य कुसुमाञ्जलिप्रकरणस्यपद्यांशस्य स्वल्पग्रन्थत्वात् मूलग्रन्थसारांशत्वात् मूलग्रन्थापेक्षया सुगमत्वाच्च मूलग्रन्थमनधीत्य स एव ग्रन्थः सर्व्वैरन्तेवासिभिरध्येतुमारब्धः। तदेवं क्रमेण देशान्तरेष्वपि मूलग्रन्थस्याध्ययनमध्यापनञ्च लुप्तकल्पं जातम्। सुतरां ग्रन्थोऽपि लुप्तकल्प एव जातः।

तमिममुपादेयं ग्रन्थं लुप्तकल्पमालोचयद्भिरेतद्देशीयग्रन्थरत्नरक्षाबद्धपरिकरैर्विद्यानुरागिभिरस्यातिकसमाजविद्वद्भिरस्य मुद्रया प्रचारं कर्त्तव्यं निश्चित्य शोधनमुद्रणायाहमनुबद्धः। मयाऽप्यस्य शोधनाय यथामति कृतः प्रयत्नः। तथाप्यनवधानादिना यद्यत्र किञ्चिदशुद्धमुपलक्ष्येत तद्विद्वद्भिः कृपया शोधनीयमिति कृतोऽयमञ्जलिः। यस्याः समितेरिच्छामात्रेण लुप्तकल्पोऽयमुत्तमो ग्रन्थः कायव्यूहमिदानीं वहति, सेयं समीचीना समितिरीदृशानि रत्नानि रक्षन्ती चिरं जीवतादीश्वरानुग्रहेणेति मनसा प्रार्थयामहे।

यानि पुस्तकान्यवलम्ब्याहमेतस्य शोधनमकरवम्, तान्युच्यन्ते। एवं

तावदस्मल्लिखितं सम्पूर्णं मूलमात्रम्। अन्यत् शान्तिपुरनिवासिश्रीयुक्त रामनाथतर्करत्नभट्टाचार्य्यात् क्रीतं सम्पूर्णं मूलमात्रम्। अपरं काशीतः क्रीतं मूलमात्रमेव शेषे किञ्चित् खण्डितम्। अपरमपि नवद्वीपनिवासि हरिनाथतर्कसिद्धान्तभट्टाचार्य्यसकाशादानीतं मूलं शेषे किञ्चित् खण्डितमेव। इतरमूलपुस्तकं संस्कृतविद्यालयात् प्राप्तमसम्पूर्णम्। तदेवं मूलस्य पञ्च पुस्तकानि लब्धानि।

प्रकाशस्याप्येकं पुस्तकं सम्पूर्णं समीचीनञ्च तालपत्रलिखितमस्यातिकसमाजात् प्राप्तम्। अन्यत् रामनाथतर्करत्नभट्टाचार्य्यादासादितम्। अपरं हरिनाथतर्कसिद्धान्तभट्टाचार्य्यादानीतं प्रायः सम्पूर्णम्। इतरत् संस्कृतविद्यामन्दिरात् संगृहीतमसम्पूर्णम्। अन्यत् काशीतः क्रीतमसम्पूर्णम्। अपरं काशीसंस्कृतविद्यालयाध्यक्षात् आनीतं तालपत्रलिखितं समीचीनमसम्पूर्णम्। तदेवं प्रकाशस्य षट् पुस्तकानि लब्धानि।

मकरन्दस्यैकं पुस्तकं रामनाथतर्करत्नात् प्राप्तम्। अपरं हरिनाथतर्कसिद्धान्तभट्टाचार्य्यादधिगतम्। अन्यत् काशीसंस्कृतविद्यामन्दिरस्थन्यायशास्त्राध्यापकश्रीयुक्तकैलासचन्द्रशिरोमणिभट्टाचार्य्यात् समानीतम्। तदेवं मकरन्दस्य त्रीणि पुस्तकानि लब्धानि। एतानि सर्व्वाण्येव सम्पूर्णानि समीचीनानि च।

प्रकाशग्रन्थः मूलस्य समीचीनव्याख्यारूपो वर्द्धमानप्रणीतः। मकरन्दग्रन्थस्तु प्रकाशस्य व्याख्यारूपः समीचीनः सङ्क्षिप्तः सारगर्भश्च रुचिदत्तप्रणीतः।

एतस्य मुद्रापणे प्रवृत्तेन मया प्रथमतः प्रकाशसहितं मूलमेव मुद्रयितुमारब्धम्। स्थाने स्थाने टिप्पण्यां दत्तं मकरन्दसन्दर्भश्च निवेशितः। परन्तु प्रकाशस्यार्थवैमल्याय नातिविस्तरः सारगर्भोऽप्युपादेयो मकरन्दसन्दर्भोऽप्यवश्यं मुद्रणमर्हतीत्यालोचयता मया तन्मुद्रणाय स्वर्गतो राजा राजेन्द्रलालमित्रो व्यज्ञापि। तेन चानुमोदिते तन्मुद्रणे ४९ पृष्ठतः प्रभृति यथारीति मकरन्दसन्दर्भोऽपि प्रकाशस्याधस्तान्मुद्रापितः। एवं गते मकरन्दसन्दर्भस्य पूर्णतायै प्रथमोऽंशः पश्चात् पृथङ्मुद्रापितः। मकरन्दसन्दर्भस्य

यथारीति मुद्रापयारम्भात् परतः क्वचित् क्वचित् मदुक्तटिप्पयान्तु [ ] एतच्चिह्नक्रोड़ीकृतमस्ति।

अथेदानीमस्य ग्रन्थस्य प्रतिपाद्यविषयं विचारप्रणालीं च संक्षेपेण दिङ्मात्रं प्रदर्शयामि। ग्रन्थेऽस्मिन् पञ्च स्तवकाः सन्ति। (यद्यपि मूले, इति प्रथमस्तवकः—इत्येवमादिका पुष्पिका न दृश्यते, तथापि तत्र तत्रा-वान्तरप्रकरणोपसंहारकारिकाणां दर्शनात् प्रकरणसमाप्तिसूचकलिपिस-त्त्वेतस्योपलम्भात् व्याख्यातृभिः सर्व्वैरेव स्तवकविभागस्याङ्गीकृतत्वाच्च स्तवक-विभाग इहादृतः)। तेषु च स्तवकेषु यथाक्रमं चार्व्वाक-मीमांसक-सौगत-दिगम्बर-साङ्ख्यानामीश्वरसिद्धिप्रतिकूलानि मतानि निराकृतानि।

तत्र तावद्वैदिकानामग्निहोत्रादिकर्म्मणां स्वर्गादिफलकत्वं स्वर्गकामोऽग्नि-होत्रं जुहुयादित्यादिश्रुतिष्ववगतम्। स्वर्गश्च, यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरं। अभिलाषोपनीतं यत् तत् सुखं स्वःपदास्पदमित्युक्तलक्षणः सुखविशेषः। यस्मिन् शरीरे अणुमात्रमपि दुःखं न भवति, तस्मिन् शरीरे यः सुखविशेषो जायते सएव स्वर्ग इति वर्त्तुलार्थः। न चैष सुख-विशेषोऽस्मिन् लोके सम्भवति। अस्मिन् लोके दुःखवर्ज्जनेन सुखभोगस्या-सम्भवात्। तस्मात् स्वर्गादिफलं कालान्तरे भवतीत्यवश्यं वाच्यं। तत्र चाग्निहोत्रादिकं हेतुः शास्त्रप्रामाण्यात्। अग्निहोत्रादिकञ्च क्रियारूपमु-त्पन्नप्रध्वंसि न स्वर्गकालमवतिष्ठते। न च तत्काले अनवस्थितात् कारणात् कार्य्योत्पत्तिः। तस्मादग्निहोत्रादिजन्यः कश्चन व्यापारः स्वर्गपर्य्यन्तस्थायी स्वीकर्त्तव्यः। तेन व्यापारेण चिरविनष्टस्याप्यग्निहोत्रादेः स्वर्गहेतुत्वमुप-पद्यते। दृश्यते हि चिरातीतस्यानुभवस्य स्वजन्यसंस्कारद्वारा कालान्तरे स्मृतिहेतुत्वम्। स चाग्निहोत्रादिजन्यो व्यापारोऽदृष्टमिति धर्म्म इति पुण्यमिति चाख्यायते। तच्च पुण्यमचेतनं चेतनस्याधिष्ठानमन्तरेण न फल-जनकं, रथशकटादौ सर्व्वत्र चेतनाधिष्ठितानामेवाचेतनानां फलजनकत्वदर्श-नात्। न च जीवात्मनां चेतनानामप्यदृष्टाधिष्ठातृत्वं सम्भवति। यो हि यदधितिष्ठति स तद्गोचरापरोक्षज्ञानवान् भवति। वास्यादिगोचरापरोक्ष-

ज्ञानवान् हि तक्षादिर्वास्यादिकमधितिष्ठन् दृश्यते। न च जीवात्मनामदृष्टगोचरापरोक्षज्ञानमस्ति। अदृष्टस्यातीन्द्रियत्वात्। तस्मात् यः पुरुषधौरेयोऽदृष्टगोचरापरोक्षज्ञानवानदृष्टमधितिष्ठति स एवेश्वर इत्यदृष्टाधिष्ठातृतयेश्वरसिद्धिः। एवं वेदकर्त्तृतया क्षित्यादिकर्त्तृतया चेश्वरसिद्धिरिति नैयायिकानां मतम्।

तत्र चार्व्वाकादीनामित्थं प्रत्यवस्थानं। चार्व्वाकास्तावन्मन्यन्ते। यद्यदृष्टं नाम तिष्ठेत्, तदा तदधिष्ठातृतयेश्वरसिद्धिर्भवितुमर्हति। तदेव तु नास्ति प्रमाणाभावात्। न ह्यदृष्टं प्रत्यक्षं येन तत्स्वीकारः सम्भवति। न चानुमानाददृष्टसिद्धिः सम्भवति। अनुमानस्याप्रमाणत्वात्। सर्व्वत्र व्यभिचारसंशयेन, अव्यभिचरितसम्बन्धज्ञानाधीनस्यानुमानस्यासम्भवात्। अनुमानस्याप्रामाण्ये च तदधीनसङ्केतग्रहाधीनबोधजनकस्य शब्दस्यापि नास्ति प्रामाण्यं। आत्माऽपि नाम देहातिरिक्तः कश्चिन्नास्ति यस्य परलोके स्वर्गादिभोगः स्यात्। किन्तु देह एवात्मा तस्यैव चैतन्यमिति। तदेतन्मतं स्थूलतः प्रथमस्तवके निराकृतम्।

मीमांसकास्तु मन्यन्ते। नित्य एव वेदो न केनचित्कृत इति न वेदकर्त्तृतयेश्वरसिद्धिर्भवितुमर्हति। वेदस्य नित्यत्वञ्च य एव वेदो देवदत्तेनाधीतः स एव मैत्रेणाप्यधीयते इति प्रत्यभिज्ञानबलात् सिध्यति। किं बहुना, स एवायं गकार इत्यादिप्रत्यभिज्ञाबलाद्वर्णानामपि नित्यत्वं। तत्कुतो वेदस्य कर्त्ता सम्भवति इति। तदेतन्मीमांसकमतं द्वितीयस्तवके निराकृतम्।

सौगतास्तु मन्यन्ते। प्रत्यक्षानुपलम्भबाधिते तावदनुमानं न प्रवर्त्तते इति नैयायिकैरपि स्वीक्रियते। तथाच ईश्वरस्य प्रत्यक्षानुपलम्भबाधितत्वान्नानुमानेनेश्वरसिद्धिः सम्भवति। अपि च यो हि कर्त्ता भवति स शरीरी भवति इति लोके दृष्टं। ईश्वरस्त्वशरीरी नैयायिकैर्मन्यते। तस्मात् शरीराभावान्नेश्वरः कर्त्ता भवितुमर्हतीति कुतः क्षित्यादिकर्त्तृत्वेनेश्वरसिद्धिः। एवं यो हि किञ्चित् करोति स किञ्चित् प्रयोजनमभिसन्धायैव प्रवर्त्तते। ईश्वरस्त्वाप्तकामो नैयायिकैरिष्यते। न चाप्तकामस्य किञ्चित् प्रयोजनं सम्भ-

वति, यदभिसन्धाय स कर्त्ता भवेदिति। तदेतत् सौगतमतं तृतीयस्तवके निराकृतम्।

दिगम्बरास्तु मन्यन्ते। नैयायिकाभिमतस्येश्वरस्य न प्रमाणत्वं। प्रमाणपदं हि यदा करणे व्युत्पन्नं तदा प्रमाकरणबोधकं, यदा तु कर्त्तरि व्युत्पन्नं तदा प्रमाकर्तृबोधकं। ईश्वरस्तावन्न प्रमाकरणं अस्मदादिप्रमायामीश्वरस्य करणत्वे मानाभावात्। ईश्वरस्य च ज्ञानं नित्यं सर्व्वविषयञ्च नैयायिकैरङ्गीक्रियते। न च नित्यस्य वस्तुनः करणं कर्त्ता वा सम्भवति। अतईश्वरः स्वज्ञानस्यापि करणं कर्त्ता वा न भवितुमर्हति। न वा ईश्वरस्य ज्ञानं प्रमा। यद्धि ज्ञानं अज्ञाते विषये जायते सैव प्रमा। अतएव स्मरणात्मकं ज्ञानं पूर्व्वानुभूते विषये भवति इति स्मृतिर्न प्रमा। ईश्वरस्य च सर्व्वज्ञस्याज्ञातो विषयो नास्ति, यस्मिन् विषये तस्य ज्ञानं प्रमाभवेत्। तस्मादीश्वरज्ञानं न प्रमा, नापीश्वरः प्रमाणं। तथा चाप्रमाणपुरुषस्य वचसि का श्रद्धेति। तदेतन्मतं चतुर्थस्तवके निराकृतम्।

साङ्ख्यास्तु मन्यन्ते। ईश्वरे प्रमाणमेव नास्ति। न हि जगत्कर्तृतयेश्वरानुमानं सम्भवति। प्रकृतेरेव जगत्कर्तृत्वात्। वेदोऽपीश्वरसद्भावे न प्रमाणं तस्योपासनादिविधिपरत्वेन स्वार्थे तात्पर्य्याभावादिति। तदेतत् साङ्ख्यमतं पञ्चमस्तवके निराकृतम्। स्तवकान्तरेष्वपि प्रसङ्गादेतेषां मतानां किञ्चित् किञ्चित् निराकरणमस्ति।

निराकरणप्रकारोऽपि संक्षेपेण किञ्चित् प्रदर्श्यते। चार्व्वाकानां निराकरणं तावत्। इह खलु जगति न सर्व्वो जनः समानः। कश्चित् सुखी कश्चिद्दुःखी इत्येवमादिकं वैचित्र्यं जगति बहुलमुपलभ्यते। न च कारणमन्तरेण वैचित्र्यं शक्यं वक्तुं। वैचित्र्यस्य कार्य्यतया कारणजन्यत्वनियमात्। न च दृष्टं किञ्चित् कारणं तत्रास्तीत्यवश्यमदृष्टं कारणं वाच्यं। एवं बहुवित्तव्ययायाससाध्ये वैदिके कर्म्मणि प्रेक्षावतां प्रवृत्तिरपि न सम्भवति यद्यदृष्टं नाम न स्यात्। न हि तैः कर्म्मभिर्दृष्टं किञ्चित् फलं क्रियते। न च लाभख्यातिसम्मानाद्यर्थं धर्म्माचरणमित्यपि शक्यते वक्तुं। लाभादिनिरपे-

चैरपि गिरिगुहारण्यादौ निर्जनस्थानेऽपि तदाचरणात्। धर्म्माभावे धर्म्माचरणात् लाभादिकमपि न सम्भवति। धर्म्मबुद्ध्या हि लोको धार्म्मिकेभ्यो धनं ददाति। इतरथा बह्वायासोपार्जितस्य धनस्य त्यागानुपपत्तेः। न च कश्चित् प्रतारकः स्वर्गादिफलकतया यागादिकं परिकल्प्य परेषां विश्वासार्थं स्वयमपि तदनुष्ठितवान् ततस्तेन प्रतारित एव लोको यागादौ प्रवर्त्तते इत्यपि कल्पयितुं शक्यते। को हि नाम जन्तुरेवं भवेत् यः परप्रतारणार्थं बह्वायासार्ज्जितस्य धनस्य अस्थान एव व्ययं करोति उपवासादिभिश्चात्मानं क्लिश्नाति। न ह्येतावतो दुःखराशेः परप्रतारणसुखं गरीयः।

अनुमानमपि प्रमाणमेव। व्यभिचारसंशयेन हि तस्याप्रामाण्यमुच्यते। व्यभिचारसंशयश्चानुमानाधीन एव। एकमुदाहरणमवलम्ब्यैतद्विशदीक्रियते। वह्निमान् धूमादित्येकमुदाहरणमनुमानस्य। धूमो हि न वह्निं व्यभिचरति। अतो धूमेन वह्निरनुमीयते। तत्र वह्निधूमयोर्व्यभिचारसंशयेनानुमानस्याप्रामाण्यमभिमन्यते। तत्रेदं वक्तव्यम्। दृष्टयोस्तावद्वह्निधूमयोः प्रत्यक्षेणोपलम्भान्न व्यभिचारसंशयः सम्भवति। किन्त्वदृष्टयोस्तयोः कालान्तरे देशान्तरे वा व्यभिचारशङ्का स्यात्। कालान्तरस्थयोर्देशान्तरस्थयोश्च वह्निधूमयोर्ज्ञानन्तु न प्रत्यक्षेण किन्त्वनुमानेनैव। तस्मात् सिद्धं प्रत्यक्षातिरिक्तमनुमानमपि प्रमाणम्। व्यभिचारसंशयेन हेतोर्न साधकत्वमित्यप्यनुमानेऽसति वक्तुमशक्यम्।

यदि देह एवात्मा स्यात् तदा बाल्येऽनुभूतस्य वार्द्धके स्मरणं न स्यात्। बाल्यवार्द्धकयोः शरीरभेदात्। न खल्वन्येन दृष्टमन्यः स्मरतीत्येवमादिकारणैरात्माऽपि देहव्यतिरिक्तोऽङ्गीकरणीय इति।

मीमांसकानां निराकरणन्तु, वेदोऽपि न नित्यः किन्तु इतरवाक्यवदेव जन्यः वाक्यत्वादेव। वाक्यञ्च वक्तृभ्रमप्रमादादिदोषबलादप्रमाणं भवति। वेदवाक्यञ्च प्रेक्षावद्भिर्महाजनैः परिगृहीतत्वात् प्रमाणम्। अतस्तद्वक्ता भ्रमादिशून्य एव सिध्यति। स एव भगवानीश्वरः। गकारादयो वर्णा अपि न नित्याः, उत्पन्नो गकारः, विनष्टो गकारः, श्रुतपूर्व्वो गकारो नास्तीति

प्रत्यक्षत एव तदुत्पत्तिविनाशयोरनुभवात्। एवञ्च व्यक्तीनामुत्पत्तिविनाशि-त्वस्य प्रत्यक्षसिद्धत्वात् स एवायं गकार इत्यादि प्रत्यभिज्ञा गत्वादिजाति-विषयिणी वक्तव्या। सैवेयं दीपशिखेतिवत् छिन्नपुनर्जातकेशादौ त एवामी केशा इत्यादिवच्च।

सौगतमतनिराकरणमित्थम्। प्रत्यक्षानुपलम्भबाधिते अनुमानं न प्रवर्त्तते इति सत्यं, परन्तु उपलम्भयोग्यस्यानुपलम्भेनाभावनिश्चयो न त्वनुपलम्भ-मात्रेणाभावनिश्चयः। तथात्वेऽतीन्द्रियाणामाकाशादीनामप्यभावः स्यात्। ईश्वरस्तु न प्रत्यक्षोपलम्भयोग्य इति प्रत्यक्षानुपलम्भादीश्वराभाव इत्ययुक्तम्। कस्मिंश्चिदाश्रये कस्यचिदनुमानं भवति। यथा पर्व्वते वह्नेः। शरीराभावात् प्रयोजनाभावाच्च ईश्वरे कर्तृत्वाभावानुमाने आश्रयस्येश्वरस्याङ्गीकारप्रसङ्गः। तदनङ्गीकारे कुत्र कर्तृत्वाभावानुमानम्? योहि कर्त्ता भवति, तेनावश्यं शरीरिणैव भवितव्यमित्यत्रापि प्रमाणं नास्ति। विपक्षे बाधकाभावात्। यत्र धूमस्तत्रावश्यं वह्निना भवितव्यमित्यत्र तु वह्निधूमयोः कार्य्यकारणभाव एव विपक्षबाधकः। ईश्वरस्य निजप्रयोजनाभावेऽपि भूतानुग्रहः प्रयोजनम्।

दिगम्बरमतनिराकरणमेवम्। ईश्वरज्ञानस्य नित्यत्वेऽपि तदाश्रय ईश्वरो भवत्येव। क्रियाश्रयस्यैव कर्तृत्वात्। सुतरामीश्वरः प्रमाणं कर्तृव्युत्पन्नप्रमाण-शब्दस्य प्रमाकर्त्तरि प्रवृत्तेः। अज्ञातविषये यत् ज्ञानं जायते सैव प्रमा इत्यपि न। एकविषयकधारावाहिकबुद्धीनामुत्तरासामप्रमात्वप्रसङ्गात्। शुक्तिकायामिदं रजतमिति भ्रमज्ञानस्यापि प्रमात्वप्रसङ्गाच्च। किन्तु यथा-र्थोऽनुभवः प्रमा इत्येव प्रमालक्षणम्। स्मृतिस्तु नानुभव इति नासौ प्रमा। ईश्वरज्ञानन्तु यथार्थमनुभवश्चेति तत्प्रमा भवत्येव।

साङ्ख्यमतनिरासस्तु। यथा घटादिकार्य्यं कर्तृजन्यं तथा क्षित्यादिकार्य्य-मपि। यश्च क्षित्यादिकर्त्ता स एवेश्वरः। न च प्रकृतिः कर्त्री सम्भवति। जड़ायाः प्रकृतेः कर्तृत्वासम्भवात्। कर्तुश्चैतन्यनियमात्। एवं सर्गाद्य-कालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म्मापि ईश्वरप्रयत्नादेव जायते कर्म्मणां चेतनप्रयत्नजन्यत्वनियमात्। ईश्वरमुपासीतेत्यादिवेदवाक्या-

न्यपि ईश्वरसद्भावे प्रमाणम् । तत्रेश्वरादिपदं स्वार्थद्वारैव विधिपरम् । यथा स्वर्गकामो यजेतेत्यत्र स्वर्गपदं स्वार्थद्वारा विधिपरं तद्वत् । अन्यथा स्वर्गेऽप्यनाश्वासः स्यात् ।

ग्रन्थेऽस्मिन्नन्येऽपि बहवोऽर्था विचारिताः । तद्यथा । प्रथमस्तवके तावत्, कार्य्यकारणभावव्यवस्थापनं, कार्य्यकारणप्रवाहस्यानादित्वं, आकस्मिकत्ववादखण्डनं, मीमांसकाभिमतशक्तिपदार्थखण्डनं, ब्रह्मकारणवादनिराकरणं, प्रकृतिकारणवादखण्डनं, अदृष्टस्य भोक्तृनिष्ठत्वं, अभावस्य कारणत्वव्यवस्थापनं, बुद्धेः कर्तृत्वनिराकरणं, आत्मनः कर्तृत्वव्यवस्थापनं, क्षणभङ्गवादनिराकरणं, कारणत्वस्य स्वाभाविकत्वौपाधिकत्वविचारः, नित्यविभोरपि कारणत्वव्यवस्थापनं इत्येतेऽर्थाविचारिताः ।

प्रमाया गुणजन्यत्वव्यवस्थापनं, प्रलयव्यवस्थापनं, वेदादिसंप्रदायस्य क्रमिकह्रासव्यवस्थापनं इत्येतानि द्वितीयस्तवके चिन्तितानि ।

अलीकस्य नाभावप्रतियोगित्वं न चाभावाधिकरणत्वमिति निरूपणं, योग्यानुपलब्धिनिरूपणं, ईश्वरबाधकानुमानखण्डनं, अनुमानप्रामाण्याभावेऽपि सम्भावनामात्रात् प्रवृत्तिरिति चार्व्वाकमतखण्डनं, अनुमानप्रामाण्यव्यवस्थापनं, तर्कस्य शङ्कानिवर्त्तकत्वकथनं, सादृश्यस्य पदार्थान्तरत्वखण्डनं, मीमांसकाभिमतोपमानखण्डनं, स्वमते उपमाननिरूपणं, उपमानस्य प्रमाणान्तरत्वव्यवस्थापनं, शब्दस्यानुमानत्वखण्डनं, लौकिकशब्दो न प्रमाणमिति प्रभाकरमतखण्डनं, शब्दस्य प्रमाणान्तरत्वव्यवस्थापनं, अर्थापत्तेः प्रमाणान्तरत्वखण्डनं, अनुपलब्धेः प्रमाणान्तरत्वखण्डनं इत्येतेऽर्थास्तृतीयस्तवके व्युत्पादिताः ।

प्रमालक्षणं, ज्ञातताखण्डनं, ज्ञानस्य विषयव्यवस्थोपपादनं, प्रमात्वप्रामाण्ययोर्निरूपणमित्येते चतुर्थस्तवकगताः ।

पञ्चमस्तवके तु, वेदस्य पौरुषेयत्वव्यवस्थापनं, ईश्वरबाधकानुमानापेक्षया साधकानुमानस्य बलवत्त्वव्यवस्थापनं, तत्रानुकूलतर्ककथनं, प्रतिकूलतर्काणामाभासत्वव्यवस्थापनं, विधिपदार्थनिरूपणं, प्रवर्त्तकज्ञानविचारः, भावनापदार्थनिरूपणं, आख्यातस्य यत्नार्थकत्वनिरूपणं, कृत्स्नस्य वेदस्येश्वरपरत्वमित्येते

समालोचिताः। अन्यदपि किञ्चित् किञ्चित् तत्र तत्र विचारितमस्ति। अत्र च विचार्य्यविषयं कारिकया संक्षेपेणोक्त्वा गद्येन विस्तरेण तद्विचारः कृतोऽस्ति।

अथेदानीं ग्रन्थकर्त्तुर्विषये किञ्चिदालोचयामः। उदयनाचार्य्येण तावत् किरणावलीबोधसिद्ध्यात्मतत्त्वविवेकादयो बहवो ग्रन्था रचिताः। उदयनाचार्य्यस्तावत् शारीरकभाष्यकर्त्तुर्भगवतो भास्कराद् ब्रह्मपरिणामवादिनः पराचीन इति ब्रह्मपरिणतेरिति भास्करगोत्रे युज्यते इत्यत्रैव तदुल्लेखदर्शनात् ज्ञायते। सोऽयं ब्रह्मपरिणामवादः शङ्करभाष्ये खण्डितो वर्त्तते इति शङ्कराचार्य्यो भास्करात् पराचीनः इत्यनुमीयते। आत्मतत्त्वविवेके सा चावस्था न हेया मोक्षनगरगोपुरायमाणत्वादित्यद्वैतवादे सम्मतिग्रन्थं प्रदर्शयत उदयनाचार्य्यस्याद्वैतवादावलम्बिनः गौड़पादाचार्य्यात् शङ्कराचार्य्याच्च पराचीनत्वमवगम्यते। परमात्मतत्त्वविवेकपरिसमाप्तौ,—

बहुतरपरतन्त्रप्रान्तरध्वान्तभीतेः
पतितपथिकरक्षासार्थवाहेन यत्नात्।
इदमुदयकरेण न्यायवर्त्मावलोक-
व्यतिकृतिमवधूय व्यञ्जितं वर्त्म मुक्तेः॥

इति लेखदर्शनादुदयकर इत्यपि नामान्तरं तस्येति प्रतीयते। एतत् पद्यानुसारादुदयकरमेवोद्द्योतकरं मन्यमानाः केचिदुदयनोदयकरोद्द्योतकराणामेकत्वमाचक्षते। परमुद्द्योतकरकृतन्यायवार्त्तिकस्योपरि वाचस्पतिमिश्रेण न्यायवार्त्तिकतात्पर्य्यनाम्नी टीका विरचिता। उदयनाचार्य्येण च न्यायवार्त्तिकतात्पर्य्यटीकोपरि न्यायवार्त्तिकतात्पर्य्यपरिशुद्धिनाम्नी टीका कृतेति नायमुद्द्योतकरः। तथाच न्यायवार्त्तिकतात्पर्य्यपरिशुद्धेरादिमः श्लोकः,

मातः, सरस्वति, तवाङ्घ्रियुगं विभाव्य
भूयो विधाय विनयं विनिवेदयामि।
वाक्चेतसोर्मम तथा भव सावधाना
वाचस्पतेर्व्वचसि न स्खलतो यथैते॥

किरणावलीग्रन्थेऽपि इत्याचार्य्या इत्यनेनासङ्गत्न्यायवार्त्तिकमुद्धृतमस्ति। न्यायवार्त्तिकतात्पर्य्यपरिशुद्धिरुदयनाचार्य्यकृतेति तद्ग्रन्थमध्य एव, इति न्यायाचार्य्यश्रीमदुदयनविरचितन्यायवार्त्तिकतात्पर्य्यपरिशुद्धौ, इति तत्र तत्र लेखदर्शनात् स्फुटमवगम्यते। तस्मादुदयकरो न न्यायवार्त्तिकप्रणेतो-द्योतकरः। पूर्व्वोद्धृतात्मतत्त्वविवेकस्यश्लोके इदमुदयकरेणेत्यत्र तदिदमु-दयेनेति केचित् पठन्ति। एतत्पाठपक्षे तूदयनाचार्य्यस्योदयकरेति नामा-न्तरसत्त्वे न प्रमाणमिति बोध्यम्।

भगवत्पादेन शङ्कराचार्य्येण बौद्धादौ निराकृते कालवशात् पुनरपि तेषां प्रादुर्भावे जाते उदयानाचार्य्येण ते निराकृता इत्यपि वृद्धाः कथयन्ति। तत्रैषा किंवदन्ती प्रचरति। उदयनाचार्य्यो बौद्धानां पराजयात् परतः कदाचित् पुरुषोत्तमक्षेत्रं गतवान्। तत्र श्रीमन्दिरं प्रविश्य भगवन्मूर्त्तिं न दृष्टवान्। ततः स्तवादिभिराराध्यापि यदा भगवद्दर्शनं नालभत तदाऽतिनिर्व्विसः,

पुनर्बौद्धे समायाते मदधीना तव स्थितिः।

इत्युक्त्वा श्रीमन्दिरात् यदा निर्गन्तुमैच्छत् तदा भगवानपि दर्शनदानेन समक्षतार्थयदिति।

प्रसिद्धविक्रमादित्यसभामलङ्कुर्व्वाणेन महाकविना कालिदासेन स्पर्द्ध-मानः सुतरां तत्समानकालीनो दिङ्नागनामा कश्चित् महापण्डित आसी-देति किंवदन्ती प्रचरति।

दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपाम्।

इति कालिदासोक्त्या संवदति च। दिङ्नागस्तु बौद्ध आसीदिति षट्-शाह्स्रीपरिमितप्रज्ञापारमिताटीकायामुपलभ्यते। उद्योतकरेण तन्मत-खण्डनार्थमेव न्यायवार्त्तिकं निर्म्मितम्। अयं हि न्यायवार्त्तिकस्यादिमः श्लोकः,—

यदक्षपादः प्रवरो मुनीनां
शमाय लोकस्य जगाद शास्त्रम्।

कुतार्किकध्वान्तनिरासहेतोः
करिष्यते तस्य मया निबन्धः ॥

अथ भगवता अक्षपादेन निःश्रेयसहेतौ शास्त्रे प्रणीते व्युत्पादिते च भगवता पक्षिलस्वामिना किमपरमवशिष्यते यदर्थं वार्त्तिकारम्भ इति शङ्कां निराचिकीर्षुः सूत्रकारोक्तप्रयोजनानुवादपूर्व्वकं वार्त्तिकारम्भप्रयोजनं दर्शयति यदक्षपाद इति । यद्यपि भाष्यकृता कृतव्युत्पादनमेतत्, तथापि दिङ्नागप्रभृतिभिरर्वाचीनैः कुहेतुसन्तमससमुत्थापनेनाच्छादितं शास्त्रं न तत्त्वनिर्णयाय पर्य्याप्तमित्युद्योतकरेण स्वनिबन्धोद्योतेन तदपनीयते इति प्रयोजनवानयमारम्भः इति न्यायवार्त्तिकतात्पर्य्यटीकायां वाचस्पतिमिश्राः । अत्र दिङ्नागप्रभृतीनामर्व्वाचीनत्वकथनात् तेषां समानकालीनत्वं तेभ्यः कियतः कालात् परतो वा प्रादुर्भावो वार्त्तिककारस्यावगम्यते ।

न्यायवार्त्तिकस्य पुष्पिकासु प्रायः सर्व्वत्रैव, इति औद्योतकरे न्यायवार्त्तिके इति लिखितं । क्वचित् पुस्तके कुत्रचित् इति परमर्षिभारद्वाजश्रीमदुद्योतकरन्यायाचार्य्यविरचिते इत्यादि लिखितं दृश्यते । एतद्दर्शनेन भारद्वाजर्षिरेवोद्योतकर इति केचिन्मन्यन्ते । नैतत् समीचीनमिति लक्ष्यते । दिङ्नागाचार्य्यात् पराचीनस्य तस्यर्षित्वासम्भवात् । परमर्षिन्यायाचार्य्यविशेषणोल्लेखस्य सम्प्रदायविरुद्धत्वाच्च । अतएव पातञ्जले व्यासभाष्ये तथाविधं किमपि न लिखितम् । परमर्षिभारद्वाजेत्युत्तरपदवृद्ध्याश्रयणेन कथञ्चित् सङ्गमनीयम् । तथाच भरद्वाजगोत्रोत्पन्नः स इत्यायाति । न हि भारद्वाजनामा कश्चिदृषिः प्रसिद्धः, भरद्वाज एव तु तथा प्रसिद्धः । अनेनैव प्रकारेण,

यदक्षपादप्रतिमो भाष्यं वात्स्यायनो जगौ ।
अकारि महतस्तस्य भारद्वाजेन वार्त्तिकम् ॥

इति न्यायवार्त्तिकस्यान्तिमः श्लोकोऽपि सङ्गच्छते । ततश्च भाष्यकारो वात्स्यायनगोत्रोत्पन्न इति सिध्यति । पक्षिलस्वामीति नाम्नापि स च ऋषिरिति प्रतीयते । ऋषीणां तथाविधनाम्नः क्वचिदप्यश्रवणात् । यदक्ष-

पादप्रतिम इति वार्त्तिकश्लोके भारद्वाजेनेत्यस्य भरद्वाजगोत्रोत्पन्नेनेतिवत् वात्स्यायन इत्यस्यापि वात्स्यायनगोत्रोत्पन्न इत्यर्थस्यैव प्रतीतिर्भवति। यदक्षपादप्रतिम इत्यनेन भाष्यकर्त्तुरक्षपादवत् न्यायविद्याप्रवीणत्वमेव प्रतीयते न तु ऋषित्वमिति।

तदेवं परतनानां बौद्धानां निराकरणं प्रथममुद्योतकरेण ततो भगवता शङ्कराचार्य्येण ततोऽप्युदयनाचार्य्येण कृतमित्यवगम्यते। उद्योतकरो हि विक्रमादित्यसमानकालीनस्ततः कियता कालेन परवर्त्ती वा। सोऽयं भगवतः शङ्कराचार्य्यात् पूर्व्ववर्त्तीति सम्भाव्यते। यतः शङ्कराचार्य्यस्य शिष्यः पद्मपादाचार्य्य एव भवान्तरे वाचस्पतिमिश्रो भूत्वा बहूनां दर्शनानां टीकाविरचयाञ्चकार। सोऽयं वृत्तान्तो माधवाचार्य्यप्रणीतशङ्करदिग्विजये दृश्यते। वाचस्पतिमिश्रस्तु भामतीसमाप्त्यवसरे महाराजनृगस्य समये भामत्यादि तेन चरितमित्याह स्म। एष हि भामत्या अन्तिमः श्लोकः,—

नरेश्वरा यच्चरितानुकार-
मिच्छन्ति कर्त्तुं न च पारयन्ति।
तस्मिन् महीपे महनीयकीर्त्तौ
श्रीमन्नृगेऽकारि मया निबन्धः।

सोऽयं नृगः कस्मिन् देशे कस्मिन् समये राज्यं चकारेति निश्चेतुं न शक्यते। परन्तु नानादर्शनटीकाकारो वाचस्पतिमिश्रो भगवतः शङ्कराचार्य्यस्य समानकालीनः किञ्चित्परवर्त्ती वेति माधवाचार्य्यसन्दर्भादवगम्यते। वाचस्पतिमिश्रस्य न्यायवार्त्तिकतात्पर्य्यटीकाख्यया,

इच्छामः किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानां।
उद्योतकरगवीनामतिजरतीनां समुद्धरणात्॥

इत्युक्त्या उद्योतकरस्य वाचस्पतिमिश्रादतीवप्राचीनत्वमवगम्यते। यतोऽतिजरतीनामुद्योतकरगवीनामित्युक्तम्। उद्योतकरेण न्यायभाष्यस्योपरिवार्त्तिकं रचितम्। न्यायभाष्यञ्च भगवता वात्स्यायनेन प्रणीतम्। वात्स्यायनश्च यदि,

वात्स्यायने मल्लनागः कुटिलश्चणकात्मजः ।
द्रामिलः पक्षिलस्वामी विष्णुगुप्तोऽङ्गुलश्च सः ॥

इत्यभिधानचिन्तामणिसन्दर्भात् चाणक्य एव भवेत्, तदा चन्द्रगुप्तसमये न्यायभाष्यमभूदित्यवगम्यते । सम्भाव्यते इदमेव तत्त्वम् । अतएव पूर्व्वोक्त-न्यायवार्त्तिकतात्पर्य्यटीकासन्दर्भात् पक्षिलस्वामिना न्यायभाष्यं कृतमित्य-वगम्यते । माधवाचार्य्योऽपि सर्व्वदर्शनसंग्रहे तथैवाभिहितवान् । ततश्च वात्स्यायनः पक्षिलस्वामी चैकएवेति निःसन्देहमवगम्यते ।

न्यायसूत्रप्रणेता महर्षिर्गौतमस्तु वेदव्याससमकालीन इति सम्भाव्यते । एवं किल किंवदन्ती प्रचरति । वेदव्यासो गौतमस्य शिष्य आसीत् । तेन च शारीरके, एतेन शिष्टापरिग्रहा अपि व्याख्याताः इत्यनेन सूत्रेण शिष्टा-परिग्रहतया गौतमादिमते निराकृते तत् अवगम्य भगवान् गौतमो नानेव चक्षुषा त्वं शिष्यापसदं पश्यामीत्युक्तवान् । तत् श्रुत्वा भगवान् वेदव्यासो गुरोः प्रसन्नतायै तच्चरणोपान्ते नत्वा तं तुष्टाव । ततः शिष्यवत्सलो महर्षि-र्गौतमो योगबलात् पादे चक्षुरुत्पाद्य तेन चक्षुषा वेदव्यासं दृष्टवान्,—इति । अतएवाक्षपाद इति तस्यापराख्या प्रचरति । सोऽयं महर्षि-र्गौतमो विहारदेशवास्तव्य आसीदित्यनुमीयते । अद्यापि तत्प्रदेशे गौत-माश्रमनाम्ना प्रसिद्धं किञ्चित् स्थानमस्ति । भगवता रामचन्द्रेण विश्वामि-त्राश्रमात् मिथिलागमनसमये पथि गौतमाश्रमः प्राप्तः । गौतमस्य पुत्रः शतानन्दश्च मिथिलेश्वरस्य जनकस्य पुरोहित आसीत् । ‘वक्सर’—इत्याख्यस्य स्थानस्यानतिदूरे ताड़कावनं ततोऽप्यनतिदूरे विश्वामित्राश्रम आसीदिति तद्देशवासिषु वृद्धपरम्परागता किंवदन्ती प्रचरति ।

तदेवं न्यायसूत्रप्रणेता महर्षिर्गौतमो वेदव्यासस्य समानकालीनः भाष्यप्रणेता भगवान् वात्स्यायनश्चन्द्रगुप्तसमानकालीनः । ततो विक्रमादित्य-काले ततः किञ्चित् परतो वा वार्त्तिककारस्योद्योतकरस्याविर्भावः । ततो भगवतः शङ्कराचार्य्यस्याविर्भावः । ततो नृगस्य राजत्वकाले वाचस्पतिमिश्र-स्योत्पत्तिः । तत उदयनाचार्य्यस्य प्रादुर्भावः ।

सोऽयमुदयनाचार्य्यः खण्डनकर्त्तुर्हर्षमिश्रात् प्राचीनः। अतएव हर्ष-मिश्रस्य पित्रा श्रीहीरेण सार्द्धमुदयनाचार्य्यस्य शास्त्रीयविवाद आसीदिति किंवदन्त्यपि सङ्गच्छते। हर्षमिश्र एव श्रीहर्षनामा। श्रीहर्षः किल खण्डनादिषु सर्व्वत्रैव श्रीहर्षनाम्ना आत्मानमभिहितवान् इति परतः प्रदर्शयिष्यामः। पञ्चदशीकारेण तु हर्षमिश्रपदेन तस्योल्लेखः कृतः।

गिवक्त्रावभिमानं ये दधते तार्किकादयः।

हर्षमिश्रादिभिस्ते तु खण्डवादौ सुशिक्षिताः॥

इत्यनेन पद्येन। सोऽयं श्रीहर्षः खण्डनग्रन्थे उदयनाचार्य्यमतं खण्डित-वान्। कुसुमाञ्जलिप्रकरणस्थां कारिकाञ्चोद्धृत्य उपहासच्छलेनान्यथा पठित-वान्। तथाहि खण्डनखण्डखाद्ये।

तस्मादस्माभिरप्यस्मिन्नर्थे न खलु दुष्पठा।

त्वद्गाथैवान्यथाकारमक्षराणि कियन्त्यपि॥

व्याघातो यदि शङ्काऽस्ति न चेच्छङ्का ततस्तराम्।

व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः॥

एषा हि कुसुमाञ्जलिस्था कारिका।

शङ्का चेदनुमास्त्येव न चेच्छङ्का ततस्तराम्।

व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः॥

सोऽयं श्रीहर्षः गौड़ाधिपतिना आदिसूरेण कान्यकुब्जदेशादानीतानां पञ्चानां ब्राह्मणानामन्यतमः। अतएव श्रीहर्षः कान्यकुब्जेश्वरस्य सभा-यामासीदिति गौड़ोर्व्वीशकुलप्रशस्तितिलकं रचितवानिति च द्वयमपि तद्ग्रन्थादुपलभ्यमानमुपपद्यते। तथाच नैषधचरितस्य खण्डनखण्डखाद्यस्य चान्ते श्लोकः,—

ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरात्

यः साक्षात् कुरुते समाधिषु परब्रह्म प्रमोदार्णवम्।

यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः

श्रीहर्षस्य कवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम्॥

तथा नैषधचरितस्य,

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
गौड़ोर्व्वीशकुलप्रशस्तितिलकभ्रातर्थ्ययं तन्महा-
काव्ये चारुणि नैषधीयचरिते सर्गोऽगमत् सप्तमः ॥

खण्डनोद्धारनामा वाचस्पतिमिश्रविरचित एको ग्रन्थोऽस्ति । तत्र च श्रीहर्षकृतस्य खण्डनग्रन्थस्य खण्डनं वर्त्तते । एतद्दर्शनात् श्रीहर्षात् पराचीनो वाचस्पतिमिश्रस्ततः पराचीन उदयनाचार्य्य इति केचिन्मन्यन्ते । तदेतदसमञ्जसं । यथा चोदयनाचार्य्यः श्रीहर्षात् पूर्व्ववर्त्ती तथोपपादित-मधस्तादेव । तस्मात् खण्डनोद्धारकर्त्ता वाचस्पतिमिश्रो नानादर्शनटीका-कारवाचस्पतिमिश्रादन्य एव । नानादर्शनटीकाकृद्भिर्वाचस्पतिमिश्रैः भामती-परिसमाप्त्यवसरे स्वनिर्मितग्रन्थानामुल्लेखः कृतः । तथाहि,—

यन्न्यायकणिका-तत्त्वसमीक्षा-तत्त्वविन्दुभिः ।
यन्न्यायसांख्ययोगानां वेदान्तानां निबन्धनैः ॥
समचैषं महत्पुण्यं तत्पुण्यं पुष्कलं मया ।
समर्पितमथैतेन प्रीयतां परमेश्वरः ॥

तदत्र खण्डनोद्धारस्यानुल्लेखादन्य एव वाचस्पतिमिश्रस्तत्कर्त्तेति । अतएव खण्डनग्रन्थे पण्डकमुद्दाह्य मुग्धायाः पुत्रप्रार्थनमिति वाचस्पतिरुपालम्भमवा-दीदिति श्रीहर्षेण वाचस्पतेरुल्लेखः कृतः सङ्गच्छते । सोऽयं नवीनो वाचस्प-तिमिश्रः गङ्गेशोपाध्यायकृततत्त्वचिन्तामणिग्रन्थस्योपरि टीकां रचितवान् । गङ्गेशोपाध्यायेन, इति वाचस्पतिवचनयोरविरोध इत्यनेन नानादर्शनटीका-कृतो वाचस्पतिमिश्रस्यैवोल्लेखः कृतः । नूतनस्तु वाचस्पतिः स्मृतिनिबन्धानपि रचयाञ्चकार । अतएव खण्डनोद्धारस्य श्राद्धचिन्तामण्यादिस्मृतिबन्धानाञ्च परिसमाप्तौ, इति महामहोपाध्यायसन्मिश्रवाचस्पतिविरचिते इति समा-नाकार एव लेखो दृश्यते । न्यायवार्त्तिकतात्पर्य्यटीकायान्तु इत्याचार्य्य श्रीमिश्र श्रीवाचस्पतिविरचितायामित्यादि तत्र तत्र लिखितं । भामत्यादौ

तु इति वाचस्पतिमिश्रविरचिते इत्यादि लेखोदृश्यते। अपि च खण्डनो-द्धारस्य प्रारम्भे,

क्षीराब्धेरब्जिह्मानां त्रिदशपरिषदि प्रोल्लसद्भूरिभङ्गी-
भङ्गीकुर्व्वन् कटाक्षैस्त्रिभुवनजननीं व्रीडया नम्रमौलिम्।
देवः पायादपायात् कुसुमशरपरीरम्भसञ्जातभावः
सद्यः खिद्यत्तरेण स्मितकमलमुखीमाददानः करेण॥

इत्ययं मङ्गलाचरणश्लोकोऽस्ति। विवादचिन्तामणिप्रारम्भेऽप्ययमेव मङ्ग-लाचरणश्लोकोऽस्ति। तदनयोरेक एव कर्त्तेति नास्ति सन्देहः। अपि च नानादर्शनटीकाकारो वाचस्पतिमिश्रो महाराजन्नगस्य राजत्वसमये प्रादु-रासीदित्युक्तम्। अयञ्च स्मृतिनिबन्धादिप्रणेता वाचस्पतिमिश्रो भैरवेन्द्र-नृपतेर्महिष्यास्तत्पुत्रस्य च राजाधिराजपुरुषोत्तमदेवस्य समये प्रादुरासीत् निखिलशास्त्रवेत्ता चासीदिति तत्कृतद्वैतनिर्णयादवगम्यते। तथाच द्वैत-निर्णयस्योपक्रमणिकास्थः श्लोकः,—

श्रीभैरवेन्द्रधरणीपतिधर्म्मपत्नी
राजाधिराजपुरुषोत्तमदेवमाता।
वाचस्पतिं निखिलतन्त्रविदं नियुज्य
द्वैते विनिर्णयविधिं विधिवत्तनोति॥

तस्माद्भिन्नावेवैतौ वाचस्पतिमिश्राविति ध्रुवम्। नानादर्शनटीकाकारस्तु वाचस्पतिमिश्रः भगवतः शङ्कराचार्य्यस्य समानकालीनस्तस्मात् किञ्चित्परा-चीनो वा। भगवान् शङ्कराचार्य्यस्तु कलियुगस्य एकोननवत्यधिकाष्टशता-धिकत्रिसहस्रमिते (३८८९) वर्षे प्रादुर्भूतः। तथाचाहुः साम्प्रदायिकाः,

निधिनागेभवह्न्यब्दे विभवे मासि माधवे।
शुक्ले तिथौ दशम्यां तु शङ्करार्य्योदयः स्मृतः॥

यद्यपि श्लोके कलियुगस्योल्लेखो नास्ति, तथापि सम्प्रदायविदां समयानु-सारात् कलियुगस्यैवेयं वर्षसंख्येति निश्चीयते। शङ्करमन्दारसौरभेऽप्युक्तम्,

प्राहुत तिथ्यशरदामभियातवत्या-

मेकादशाधिकशतोनचतुःसहस्राम् ।

साम्प्रतञ्च कलियुगस्य पञ्चनवत्यधिकनवशताधिकचतुःसहस्रमितो (४९९५) वर्षो वर्त्तते । तेन इतःपूर्व्वं पञ्चाधिकैकादशशतमिते (११०५) वर्षे नवाधिकसप्तशतमिते (७०९) शकवर्षे वा भगवान् शङ्कराचार्य्यः प्रादुर्बभूवेति लभ्यते । ततः कियत्कालानन्तरं नानादर्शनटीकाकृतो वाचस्पतिमिश्रस्य प्रादुर्भावः । ततो वाचस्पतिमिश्रकृतन्यायवार्त्तिकतात्पर्य्यटीकाया उपरि न्यायवार्त्तिकतात्पर्य्यपरिशुद्धिकृत उदयनाचार्य्यस्याविर्भावः । तथाचोदाहृतं पुरस्तात्, वाचस्पतेर्वचसि ये भव सावधाना इत्यादि । न्यायवार्त्तिकतात्पर्य्यपरिशुद्धिरुदयनाचार्य्यकृतेति तु "इति न्यायाचार्य्य श्रीमदुदयनविरचित न्यायवार्त्तिकतात्पर्य्यपरिशुद्धौ" इति पुष्पिकादर्शनान्निश्चीयते इत्युक्तम् । अध्यापकपरम्परागता प्रसिद्धिरप्येवम् । * *

वङ्गदेशवास्तव्या वारेन्द्रश्रेणीस्थाः केचिद्ब्राह्मणामन्यन्ते, यदेतेषां कस्माच्चिद्दशमः कस्माच्चिच्च द्वादशः पूर्व्वतन उदयनभादुड़िर्नामासीत् । स एवोदयनाचार्य्यः स एव च कुसुमाञ्जलिप्रणेतेति । इदमसमञ्जसं पश्यामः । यतः श्रीहर्षस्तावदादिशूरेणानीतो गौड़देशं, ततो बहुतिथे काले गते बल्लालसेनदेवेन आदिशूरसमानीतब्राह्मणवंश्यानां कौलिन्यमर्य्यादास्थापिता तत एव वारेन्द्रश्रेणीनां केषाञ्चित् भादुड़िरित्युपाधिः । बल्लालसेनदेवश्च ऊनविंशत्युत्तरसहस्रपरिमिते १०१९ शकाब्दे जीवित आसीत् । तथाहि,

निखिलनृपचक्रतिलकश्रीबल्लालसेनदेवेन ।

पूर्णे नवशशिदशमिते शकाब्दे दानसागरो रचितः ॥

अतः कथं श्रीहर्षादपि प्राचीन उदयनाचार्य्य उदयनभादुड़िरिति शक्यते वक्तुम् । अपि च मकरन्दघोषस्तावत् कान्यकुब्जादानीतानां ब्राह्मणानामन्यतमेन भट्टनारायणेन समं गौड़देशमायातः । तत्सन्ततीनामद्यत्वे केषाञ्चित् त्रयोविंशतिपर्य्यायः केषाञ्चिदष्टाविंशतिपर्य्यायः केषाञ्चिच्चान्यादृशो वर्त्तते । तत्कथं भादुड़िवंश्यानां दशमो द्वादशो वा पूर्व्वतन उदयन-

भादुड़िरुदयनाचार्य्यो भवितुमर्हति। तस्मादन्य एवोदयनभादुड़िरुदयनाचार्य्यादिति नास्ति सन्देहः।

प्रशस्तपादाचार्य्यकृतपदार्थधर्म्मसंग्रहस्योपरि उदयनाचार्य्येण किरणावलीनाम्नी टीका निरमायि। भट्टश्रीधराचार्य्येणापि न्यायकन्दलीनाम्नी टीका निरमायि। तदनयोः पदार्थधर्म्मसंग्रहटीकाकारयोः कतरः पूर्व्वतर इति तत्त्वतो निर्णेतुं न शक्यते। श्रीधराचार्य्येण वार्त्तिककारमते यद्दूषणं दत्तं उदयनाचार्य्येण किरणावल्यां तद्दूषणस्य कथञ्चिदुद्धारः कृतः। तथाहि न्यायकन्दलीसन्दर्भः,—

तस्याः (दुःखात्यन्तनिवृत्तेः) सद्भावे किं प्रमाणं, दुःखसन्ततिर्धर्म्मिणी अत्यन्तं समुच्छिद्यते सन्ततित्वाद्दीपसन्ततिवदिति तार्किकाः। तदयुक्तम्। पार्थिवपरमाणुरूपादिसन्तानेन व्यभिचारात्। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इत्यादयो वेदान्ताः प्रमाणमिति तु वयम्।

उदयनाचार्य्येण तु किरणावल्यामेवमुक्तम्,

किं पुनरत्र प्रमाणं। दुःखसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवदित्याचार्य्याः। पार्थिवपरमाणुरूपादिसन्तानेनानैकान्तिकमिदमिति चेन्न। सर्व्वात्मगतदुःखसन्ततिपक्षीकरणे प्रकृतस्यापि पक्षेऽन्तर्भावात्।

तदनेन श्रीधराचार्य्यात् परवर्त्ती उदयनाचार्य्य इति भवति प्रतीतिः। परमेतद्व्यभिचारवारणस्यानतिसमीचीनत्वादन्यथा उदयनाचार्य्यात् परवर्त्तिनाऽपि श्रीधराचार्य्येण तद्दूषणदानं नात्यन्तमसम्भवि। उदयनाचार्य्योऽप्युक्तानुमाननिर्भरं त्यक्त्वा, उपसंहारे

अशरीरं वाव सन्तं न प्रियाप्रियेस्पृशत इत्याद्यागमाचायमर्थोऽध्यवसेयः। इत्याह स्म। अत्रैवोदयनाचार्य्यो विरराम। श्रीधराचार्य्यस्तु

आगममुपदर्श्य सिद्धार्थे वेदानां न प्रामाण्यमित्याशङ्क्य परतो विचारान्तरमुत्थापितवान्। उदयनाचार्य्येण संक्षेपेण विचारितस्य विस्तरतो विचारोऽपि श्रीधराचार्य्येण कृतो दृश्यते। अपि चोदयनाचार्य्यः किरणावलीप्रारम्भे,

अतिविरसमसारं मानवार्त्ताविहीनं
परिततबहुवेलप्रक्रियाजालदुःस्थम् ।
उदधिसममतन्त्रं तन्त्रमेतद्वदन्ति
प्रबलजडधियो ये तेऽनुकम्प्या नन्त एते ।

इत्यभिहितवान् । तदनेन किरणावलीरचनात् पूर्व्वं पदार्थधर्म्मसंग्रहस्योपरि समीचीना कापि टीका नासीदिति प्रतीयते । तत्पूर्व्वं न्यायकन्दल्याः सत्त्वे हि तस्याः समीचीनतया मानवार्त्तादियुक्ततया च तदुक्तिर्न समञ्जसा स्यात् । तस्मादुदयनाचार्य्यः श्रीधराचार्य्यात् पूर्व्ववर्त्तीति, द्वावपि भिन्नप्रदेशवास्तव्यौ समानकालीनौ वेति सम्भाव्यते । उभयोर्भिन्नदेशत्वे समानकालीनत्वे च एकस्य ग्रन्थो नापरेण दृष्ट इति द्वयोरपि तत्तदुक्तिर्भवितुमर्हतीति । श्रीधराचार्य्यस्तु गौड़देशीय आसीत् । एतच्च न्यायकन्दलीशेषस्थात्

आसीद्दक्षिणराढ़ायां द्विजानां भूरिकर्म्मणाम् ।
भूरिसृष्टिरिति ग्रामो भूरिसृष्टिजनाश्रयः ॥

इत्यादिलेखादवगम्यते । उदयनाचार्य्यस्तु गौड़देशीय इति केचिन्मन्यन्ते । मैथिल इत्यपरे । गौड़देशीयत्वेऽपि गौड़देशस्य प्रदेशान्तरे तस्य सत्त्वमासीदिति सम्भाव्यते । न्यायकन्दली तु त्रयोदशाधिकनवशतशकाब्दे विरचिता । तथा हि च न्यायकन्दल्या अन्तिमः श्लोकः,—

त्र्यधिकदशोत्तरनवशतशकाब्दे न्यायकन्दलीरचिता ।
श्रीपाण्डुदासयाचितभट्टश्रीश्रीधरेणेयम् ॥

तस्मादुदयनाचार्य्य एतत्पूर्व्वकालीन एतत्समानकालीनो वेति सम्भाव्यते ।

प्रकाशकारो वर्द्धमानोपाध्यायोऽपि महान् पण्डित आसीत् । तेनाचार्य्यग्रन्थानां प्रायः सर्व्वेषामेवोपरि तत्त्वचिन्तामणिग्रन्थस्योपरि मीमांसायाश्चोपरि प्रकाशाभिधानाः टीका विरचिताः । सोऽयं मैथिलः । तत्त्वचिन्तामणिकारस्य गङ्गेशापरनामधेयस्य गङ्गेश्वरस्य पुत्रः । तत्कृतप्रकाशाख्यटीकाप्रारम्भे प्रायः सर्व्वत्रैव,—

न्यायाम्भोजपतङ्गाय मीमांसापारदृश्वने ।
गङ्गेश्वराय गुरवे पित्रेऽत्रभवते नमः ॥

इत्ययं श्लोको दृश्यते । तत्त्वचिन्तामणिप्रारम्भे तु,

गङ्गेशस्तनुते मितेन वचसा श्रीतत्त्वचिन्तामणिं

इत्युक्तम् । पुष्पिकायां च क्वचित् गङ्गेशविरचिते इति क्वचित् गङ्गेश्वरविरचिते इति च लिखितमस्ति । तस्मात् गङ्गेश इति गङ्गेश्वर इति च तत्त्वचिन्तामणिकारस्य नामद्वयमिति ज्ञायते । कुसुमाञ्जलिप्रकाशे, अस्मत्पितृचरणा इति कृत्वा वर्द्धमानस्तत्त्वचिन्तामणिसिद्धान्तस्योल्लेखदर्शनाच्चैवं निर्णीयते । सुतरां वर्द्धमानोपाध्यायो गङ्गेशोपाध्यायसमानकालीनः ।

गङ्गेशोपाध्यायकृत तत्त्वचिन्तामणेरुपरि जयदेवमिश्रेणालोकनाम्नी टीका प्रणीता । स्वर्गत डाक्तरराजेन्द्रलालमित्रसम्पादिते हस्तलिखितग्रन्थानां सूचीपुस्तके जयदेवप्रणीतप्रत्यक्षालोकस्यैकं पुस्तकं उनचत्वारिंशदधिकशततमे लक्ष्मणसंवत्सरे लिखितं तेनोपलब्धमिति दृश्यते । तच्च पुस्तकं सूचीपुस्तकस्य षट्सप्तत्यधिकोनविंशतिशत (१९७६) संख्यकम् । मिथिलाप्रदेशे लक्ष्मणसेन संवत्सरस्य बहुलः प्रचार आसीत् । मिथिलादेशस्य प्राचीनलिखितग्रन्थानामन्ते लिपिकालतया लक्ष्मणसंवत्सर एव बाहुल्येन व्यवहृतो दृश्यते । लक्ष्मणसंवत्सरश्च चतुःषष्ट्युत्तरैकादशशततमे विक्रमवर्षे त्रिंशदधिकसहस्रमितशकवत्सरे पञ्चदशोत्तरपञ्चशतसम्मिते 'सन्'—इत्याख्यातवङ्गदेशप्रचलितवत्सरे च प्रवृत्तः । तथाच वृद्धपरम्परागता गाथा,—

शाके सो सन जानव सोइ । रहित वाण शशि वाण यो होइ ॥
जा सन जमा रहै सो देखऊ । शरशशि वाण हीन करि लेखऊ ॥
वाकी रहै सो ल॰ सं॰ प्रमाण । गुरु ज्ञानीजन भाषा भाण ॥
अरु चौषट् एकादश दी जे । ल॰ सं॰ सहित संवत् करि लीजे ॥

तदेवमुक्तालोकपुस्तकं एकोननवत्यधिकैकादशशततमे शकवर्षे लिखितमिति सिद्ध्यति । ततश्च तत्पूर्वं तद्ग्रन्थकरणं निर्णीयते । ततोऽपि पूर्वं वर्द्धमानोपाध्यायस्य गङ्गेशोपाध्यायस्य च स्थितिरायाति ।

अतिविरसमसारं मानवार्त्ताविहीनं
परिततबहुवेलप्रक्रियाजालदुःस्थम् ।
उदधिसममतन्त्रं तन्त्रमेतद्वदन्ति
प्रबलजड़धियो ये तेऽनुकम्प्यास्त एते ।

इत्यभिहितवान् । तदनेन किरणावलीरचनात् पूर्व्वं पदार्थधर्म्मसंग्रहस्योपरि समीचीना कापि टीका नासीदिति प्रतीयते । तत्पूर्व्वं न्यायकन्दल्याः सत्त्वे हि तस्याः समीचीनतया मानवार्त्तादियुक्ततया च तदुक्तिर्न समञ्जसा स्यात् । तस्मादुदयनाचार्य्यः श्रीधराचार्य्यात् पूर्व्ववर्त्तीति, द्वावपि भिन्नप्रदेशवास्तव्यौ समानकालीनौ वेति सम्भाव्यते । उभयोर्भिन्नदेशत्वे समानकालीनत्वे च एकस्य ग्रन्थो नापरेण दृष्ट इति द्वयोरपि तत्तदुक्तिर्भवितुमर्हति । श्रीधराचार्य्यस्तु गौड़देशीय आसीत् । एतच्च न्यायकन्दलीशेषस्थात्

आसीद्दक्षिणराढ़ायां द्विजानां भूरिकर्म्मणाम् ।
भूरिसृष्टिरिति ग्रामो भूरिसृष्टिजनाश्रयः ॥

इत्यादिलेखादवगम्यते । उदयनाचार्य्यस्तु गौड़देशीय इति केचिन्मन्यन्ते । मैथिल इत्यपरे । गौड़देशीयत्वेऽपि गौड़देशस्य प्रदेशान्तरे तस्य सत्त्वमासीदिति सम्भाव्यते । न्यायकन्दली तु त्रयोदशाधिकनवशतशकाब्दे विरचिता । तथा हि च न्यायकन्दल्या अन्तिमः श्लोकः,—

त्र्यधिकदशोत्तरनवशतशकाब्दे न्यायकन्दलीरचिता ।
श्रीपाण्डुदासयाचितभट्टश्रीश्रीधरेणेयम् ॥

तस्मादुदयनाचार्य्य एतत्पूर्व्वकालीन एतत्समानकालीनो वेति सम्भाव्यते ।

प्रकाशकारो वर्द्धमानोपाध्यायोऽपि महान् पण्डित आसीत् । तेनाचार्य्यग्रन्थानां प्रायः सर्व्वेषामेवोपरि तत्त्वचिन्तामणिग्रन्थस्योपरि मीमांसायाश्चोपरि प्रकाशाभिधानाः टीका विरचिताः । सोऽयं मैथिलः । तत्त्वचिन्तामणिकारस्य गङ्गेशापरनामधेयस्य गङ्गेश्वरस्य पुत्रः । तत्कृतप्रकाशाख्यटीकाप्रारम्भे प्रायः सर्व्वत्रैव,—

न्यायाम्भोजपतङ्गाय मीमांसापारदृश्वने ।
गङ्गेश्वराय गुरवे पित्रेऽत्रभवते नमः ॥

इत्ययं श्लोको दृश्यते । तत्त्वचिन्तामणिप्रारम्भे तु,

गङ्गेशस्तनुते मितेन वचसा श्रीतत्त्वचिन्तामणिं

इत्युक्तम् । पुष्पिकायां च क्वचित् गङ्गेशविरचिते इति क्वचित् गङ्गेश्वरविरचिते इति च लिखितमस्ति । तस्मात् गङ्गेश इति गङ्गेश्वर इति च तत्त्वचिन्तामणिकारस्य नामद्वयमिति ज्ञायते । कुसुमाञ्जलिप्रकाशे, अस्मत्पितृचरणा इति कृत्वा बहुशस्तत्त्वचिन्तामणिसिद्धान्तस्योल्लेखदर्शनाच्चैवं निश्चीयते । सुतरां बर्द्धमानोपाध्यायो गङ्गेशोपाध्यायसमानकालीनः ।

गङ्गेशोपाध्यायकृत तत्त्वचिन्तामणेरुपरि जयदेवमिश्रेणालोकनाम्नी टीका प्रणीता । स्वर्गत डाक्तरराजेन्द्रलालमित्रसम्पादिते हस्तलिखितग्रन्थानां सूचीपुस्तके जयदेवप्रणीतप्रत्यक्षालोकस्यैकं पुस्तकं ऊनषष्ट्यधिकशततमे लक्ष्मणसंवत्सरे लिखितं तेनोपलब्धमिति दृश्यते । तच्च पुस्तकं सूचीपुस्तकस्य षट्सप्तत्यधिकोनविंशतिशत (१९७६) संख्यकम् । मिथिलाप्रदेशे लक्ष्मणसेन संवत्सरस्य बहुलः प्रचार आसीत् । मिथिलादेशस्य प्राचीनलिखितग्रन्थानामन्ते लिपिकालतया लक्ष्मणसंवत्सर एव बाहुल्येन व्यवहृतो दृश्यते । लक्ष्मणसंवत्सरश्च चतुःषष्ट्युत्तरैकादशशततमे विक्रमवर्षे त्रिंशदधिकसहस्रमितशकवत्सरे पञ्चदशोत्तरपञ्चशतसम्मिते 'सन्'—इत्याख्यातवङ्गदेशप्रचलितवत्सरे च प्रवृत्तः । तथाच वृद्धपरम्परागता गाथा,—

शाके सो सन जानब सोइ । रहित वाण शशि वाण यो होइ ॥
जा सन जमा रहै सो देख ऊ । शरशशि वाण हीन करि लेख ऊ ॥
वाकी रहै सो ल० सं० प्रमाण । गुन ज्ञानीजन भाषा भान ॥
अरु चौसट् एकादश दी जे । ल० सं० सहित संवत् करि लीजे ॥

तदेवमुक्तालोकपुस्तकं एकोननवत्यधिकैकादशशततमे शकवर्षे लिखितमिति सिद्ध्यति । ततश्च तत्पूर्व्वं तद्ग्रन्थकरणं निश्चीयते । ततोऽपि पूर्व्वं बर्द्धमानोपाध्यायस्य गङ्गेशोपाध्यायस्य च स्थितिरायाति ।

दण्डविवेककारो वर्द्धमानस्तस्माद्भिन्नः। सहि भवेशस्य पुत्रः। तथाहि दण्डविवेकसमाप्तौ,—

श्रीविल्वपञ्चान्वयसम्भवेन
श्रीमद्भवेशस्य तनूद्भवेन।
श्रीवर्द्धमानेन विदेहभर्त्तुः
कृते कृतो दण्डविधौ विवेकः॥

स्वर्गतेन राजेन्द्रलालमित्रेण श्रीधरदासकृतसदुक्तिकर्णामृतग्रन्थस्यान्तस्थं

शाके सप्तविंशत्यधिकशतोपेतदशशते शरदाम्।
श्रीमल्लक्ष्मणसेनक्षितिपस्य रसैकविंशे॥
सवितुर्गत्या फाल्गुनविंशेषु परार्थहेतावकुतुकात्।
श्रीधरदासेनेदं सूक्तिकर्णामृतं चक्रे॥

इति लेखं दृष्ट्वा षड्विंशत्यधिकशतमितलक्ष्मणसेनसंवत्सरे ग्रन्थोऽयं निर्म्मित इति लिखितम्। तथा सति, लक्ष्मणसेनवत्सरशककालयोः समीकरणं न मिलति। तथाहि उक्तगाथया त्रिंशदधिकसहस्रमिते शकवर्षे लक्ष्मणसेनवत्सरस्य प्रवृत्तिर्ज्ञायते। प्रकृते च षड्विंशत्यधिकशतसंख्यया त्रिंशदधिकसहस्रमितसंख्याया योजने कृते मिलित्वा सप्तपञ्चाशदधिकैकादशशतमितः शकवत्सर आयाति न सप्तविंशत्यधिकशतोपेतदशशतमितवत्सरः।

परं षड्विंशत्यधिकशतमित लक्ष्मण संवत्सरः ग्रन्थनिर्माणकालः कथं तेन निरणायीति न खल्वधिगच्छामि। अङ्कानां वामतो गतिरिति ज्योतिर्विदां समयात् वामक्रमेण रसस्यैकविंशस्य च स्थापने षोड़शाधिकशतद्वयमितो वर्ष आयाति। स तु न सम्भवति। यतः श्रीधरदासस्य पिता श्रीवटुदासो लक्ष्मणसेनस्य समानकालीनस्तस्य मित्रं चासीत्,—इति सदुक्तिकर्णामृतग्रन्थादेवावगम्यते। न च लक्ष्मणसेनस्य राज्याभिषेकात् परं पितापुत्रयोर्मध्ये षोड़शाधिकद्विशतवर्षपरिमितकालात्ययः सम्भवति। यदि चैकविंशसंख्यया षट्संख्या योज्यते तदा मिलित्वा सप्तविंशतितमो लक्ष्मण-

सेनसंवत्सर आयाति। तदपि न समीचीनं भवति। यतो लक्ष्मणसेनो बहून् संवत्सरान् राज्यं चकारेति वृद्धाः कथयन्ति। सदुक्तिकर्णामृत-निर्माणसमये च लक्ष्मणसेनस्तत्सखः श्रीवटुदासश्च नासीदिति श्रीधरदासो-क्त्यैवावगम्यते। तथाहि सदुक्तिकर्णामृतस्योपक्रमणिकायां तेनैवमुक्तम्।

श्रौर्याणीव तपांसि बिभ्रति भवं यस्मिन्न यस्यावधि-
र्दाने दान इव द्विषामिव जयो येनेन्द्रियाणां कृतः।
सम्राजामिव योगिनामपि गुरुर्यश्च क्षमामण्डले
स श्रीलक्ष्मणसेन एव नृपतिर्मुक्तस्य जीवन्नभूत्॥
तस्यासीत् प्रतिराजडम्बरमहासामन्तचूडामणि-
र्नाम्ना श्रीवटुदास इत्यनुपमप्रेमैकपात्रं सखा।

\+ \+ \+ \+ \+ \+ \+

श्रीमान् श्रीधरदास एत्य ( इत्य ? ) धिगुणाधारः स तस्मादभूत् इत्यादि। तदत्रातीतविभक्तिनिर्देशात् ग्रन्थकरणकाले लक्ष्मणसेनस्य श्रीवटुदासस्य च स्थितिर्नासीदिति प्रतीयते।

तत्र वङ्गवत्सर-संवत्-शकवर्षैर्लक्ष्मणाब्दस्य समीकरणं वृद्धपरम्परागताया-मुक्तगाथायामुपलभ्यते। तस्यास्तु निर्मूलत्वं न वक्तुमुचितम्। यदि तु बल-वत्प्रमाणेन विरोधः स्यात्, तदा कामं तदपि स्वीक्रियेत। न त्वेवमस्ति। सदुक्तिकर्णामृतादुद्धृतस्यार्य्याद्वयस्य पाठवैलक्षण्यप्रतीतेः। तथाहि। सदु-क्तिकर्णामृतादुद्धृते आर्य्याद्वये छन्दोभङ्गदोषोऽस्ति। कालनिर्देशकप्रथ-मार्य्यायामर्थोऽपि न सङ्गच्छते। तत्र हि शाके इत्युक्ता शरदामित्युक्तम्। शरदां शाके इत्यस्य कोऽप्यर्थो न भवति। स्वर्गतेन मित्रेण सदुक्तिकर्णा-मृतस्य वङ्गाक्षरलिखितमेकं पुस्तकमुपलब्धम्। तच्च पुस्तकं पञ्चदशशतमिते शकाब्दे लिखितम्। तदानीन्तनं वङ्गाक्षरं च मैथिलाद्यक्षरविकारादि-बहुलं नेदानीन्तनवङ्गाक्षरेण मिलति। सम्भाव्यते तस्मिन् पुस्तके लेखक-प्रमादोऽपि भूयानस्ति। यतः छन्दोऽपि न तावन्मिलति। अर्थोऽपि न सङ्गच्छते। एवं तावदक्षरस्य कूटता लेखकप्रमादश्चेति द्वयं तत्र मिलितम्।

तदेतत्, क्वचिदपि काचिच्छायगमन इति न्यायमनुहरतीति तस्मिन् पुस्तके कथमप्यास्था स्थापयितुं न शक्यते। अस्यातिकसमाजपुस्तकालये एकं सदुक्तिकर्णामृतमभिनवलिखितं वर्त्तते। तत्रापि पूर्व्वोक्तासङ्गत एव पाठो दृश्यते। अनुमीयते तदपि पुस्तकमुक्तादर्शपुस्तकानुसारेणैव लिखितमिति। संस्कृतविद्यालयेऽप्येकमभिनवलिखितं सदुक्तिकर्णामृतमस्ति। तत्र सप्तविंश-त्यधिकेत्यत्र षड्विंशत्यधिकेति पाठो विद्यते। परं षड् इत्यस्योपरिभागे सप्त इति लिखितमस्ति। एवं तत्र रसैकविंशे इत्यत्र रव्वेकविंशे इति पाठोऽस्ति। तत्र च रेफात् पूर्व्वं एकस्य द्वयोर्वाऽक्षरयोर्लेखनोपयुक्तं स्थान-मलिखितं वर्त्तते। तेन तल्लेखकोऽप्यादर्शपुस्तकस्य तमंशं स्पष्टं पठितुं न शशाक इत्यनुमीयते। द्वितीया त्वार्य्या संस्कृतविद्यालयपुस्तके समीचीना वर्त्तते। तद्यथा।

सवितुर्गत्या फाल्गुनविंशेषु परार्थहेतवे कुतुकात्।
श्रीधरदासेनेदं सदुक्तिकर्णामृतं चक्रे॥

प्रथमायामप्यार्य्यायां स्वर्गतमित्रदृष्टपुस्तकेऽशुद्धः पाठ आसीदित्यत्र न सन्देहः। मम तु इत्थं प्रतिभाति। प्रथमार्य्यायां शाके इत्यत्र याते इति पाठः। सप्तविंशेत्यत्र षड्विंशेति पाठः। द्वितीयार्द्धशेषांशे रसैकविंशे इत्यत्र रसाब्धवर्षे च इति पाठ इति। तथा सति गाथयाकालो मिलति। लक्ष्मणसेनवत्सरप्रवृत्तिस्त्रिंशदधिकसहस्रमितशाकवर्षे इति गाथायामुक्तम्। तथाच त्रिंशदधिकसहस्रसंख्यया षड़धिकनवतिसंख्याया योजने कृते षड्-विंशत्यधिकशतोपेतदशशतमितशाकवत्सरो लभ्यते। उक्तगाथा तावल्लक्ष्मण-सेनवत्सरप्रवृत्तिकालबोधनार्थमेव प्रवृत्ता। तस्यां संशयं कर्त्तुं कारणं न दृश्यते।

मकरन्दकारो रुचिदत्तोऽपि जयदेवमिश्रस्य शिष्यः तत्समानकालीन-एव। एतच्च,

अधीत्य रुचिदत्तेन जयदेवाज्जगद्गुरोः।
चिन्तामणौ प्रत्यमणौ प्रकाशोऽयं प्रकाश्यते॥

इति तत्कृतचिन्तामणिप्रकाशे तदुक्तौ ख्यायते । सोऽयं रुचिदत्तः देव-दत्तस्य पुत्रः,—इति तत्कृतग्रन्थे पुष्पिकादर्शनादुपलभ्यते ।

सोदरनगरनिवासी रुचिदत्तः सूरिमूर्द्धन्यः ।
चिन्तामणिप्रकाशं व्यरचयदाशिक्षितलोकौघम् ॥

इति तदुक्तिदर्शनात् सोदरनगरनिवासी स इत्यपि ख्यायते ।

चिन्तामणेरालोककारो जयदेवश्च न केवलं दार्शनिकः, कविरप्यासीत् । तत्कृत-प्रसन्नप्रसन्नराघव-नाटकस्य प्रस्तावनायां किन्त्वेवं दृश्यते ।

सूत्रधारः । कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-
रयासीदातिथ्यं न किमिह महादेवतनयः ।
लक्ष्मणस्येव यस्यास्य सुमित्राकुक्षिजन्मनः ।
रामचन्द्रपदाम्भोजे भ्रमद्भृङ्गायते मनः ।

नटः । नन्वयं प्रमाणप्रवीणोऽपि श्रूयते । तदिह चन्द्रिकाचण्डातपयो-
रिव कवितातार्किकत्वयोरेकाधिकरणतामालोक्य विस्मितोऽस्मि ।

सूत्रधारः । क इह विस्मयः ।
येषां कोमलकाव्यकौशलकलालीलावतीभारती
तेषां कर्कशतर्कवक्रवचनोद्गारेण किं हीयते ।

एतद्दर्शनादवगम्यते तर्कशास्त्रटीकाकार एव नाटककार इति । इदम-प्यवगम्यते यदयं जयदेवः कौण्डिन्यः महादेवस्य पुत्रः सुमित्रायागर्भे समुत्पन्न-इति सुतरां गीतगोविन्दकारो जयदेवोऽस्माद्भिन्नः । तस्य हि पिता श्रीभोज-देवः माता च रामदेवी । तथा हि गीतगोविन्दपरिसमाप्तौ तेनोक्तम् ।

श्रीभोजदेवप्रभवस्य राम-
देवीसुतश्रीजयदेवकस्य ।
पराशरादिप्रियवर्गकण्ठे
श्रीगीतगोविन्दकवित्वमस्तु ॥

आलोककारस्य जयदेवस्य पक्षधर इति नामान्तरेणापि प्रसिद्धिरस्ति । तत्र च किंवदन्ती । स्वगृहे पञ्चाङ्गस्याभावमालोकयता गुरुणा बाल्ये जयदेवः

समादिष्टः, यत् पञ्चमासस्य पञ्चाङ्गं तावल्लिखित्वा आनीयतामिति। स तु कस्यचित् प्रतिवेशिनो गृहं गत्वा पञ्चमासस्य पञ्चाङ्गं दृष्ट्वा आगतवान्। ततः किमिति पञ्चाङ्गं लिखित्वा नानीतवानसीति गुरुणा पृष्टः स प्रत्युवाच। पञ्चमासस्य पञ्चाङ्गं दृष्ट्वा समागतोऽस्मि, तत्सर्व्वमेव स्मृतिप्रत्युपस्थितं वर्त्तते किं लेखनेनेति न लिखितं। ततो गुरुणाऽऽदिष्टः पञ्चमासस्य तिथिनक्षत्रयोगादिकं तत्परिमाणञ्च यथावदुक्तवान्। ततः सन्तुष्टो गुरुस्तं पक्षधरनाम्नाऽभिहितवान्। ततः प्रभृति तस्य पक्षधरनाम्ना प्रसिद्धिर्जाता। अतएव जयदेवकृतस्यालोकग्रन्थस्योपरिटीकां रचयता गदाधरेण पक्षधरनाम्ना

आलोककारस्य निर्देशः कृतः। तद्यथा।

निगूढमाविष्कुरुते प्रयत्नाद्-
गदाधरः पक्षधरस्य भावम्।

पक्षधरमिश्रेण सह तार्किकशिरोमणेरघुनाथस्य संवादआसीदिति किंवदन्ती प्रचरति। रघुनाथशिरोमणिः किल पक्षधरमिश्रसकाशं गत्वा सामान्यलक्षणां खण्डयामास। ततः पक्षधरमिश्रस्तमुद्दिश्य इदमुक्तवान्,

वक्षोजपानकृत्, काण, संशये जाग्रति स्फुटम्।
सामान्यलक्षणा कस्मादकस्मादपलप्यते। इति।

तदनेन तदानीं पक्षधरमिश्रो वयसा वृद्धतरः शिरोमणिश्च वयसा न्यूनतर इति प्रतीयते। यतः पक्षधरमिश्रः, वक्षोजपानकृत्—इति शिरोमणिं संबोधयाञ्चकार। परं स पक्षधरमिश्र आलोककारात् जयदेवापरनामधेयात् पक्षधरमिश्रादन्य इति सम्भाव्यते। तत्रेदं बीजम्। पूर्व्वमुपदर्शितात् कारणात् जयदेवापरनामधेयः पक्षधरस्तावत् एकोननवत्यधिकैकादशशतमितशकवर्षात् पूर्व्वमासीदिति स्थितम्। रघुनाथशिरोमणिश्चैतन्यश्चेति द्वावपि सहाध्यायिनौ वासुदेव सार्व्वभौमस्यान्तेवासिनौ। चैतन्यश्च समाधिकचतुर्द्दशशतमितशकाब्दे प्रादुरासीत्। तथाच चैतन्यचन्द्रोदये।

शाके चतुर्दशशते रविवाणियुक्ते
गौरोहरिर्धरणिमण्डल आविरासीत् ॥

तस्याविर्भावकालात् परत एव तयोरध्ययनसम्भवात् आलोककारेण पक्षधरमिश्रेण सार्द्धं शिरोमणिभट्टाचार्य्यस्य संवादः कथमपि न सम्भवति। सुतरां स पक्षधरमिश्र आलोककारपक्षधरमिश्रादन्य इति सिद्धम्। तदेवमालोककारपक्षधरमिश्रायां समानकालीनो वचिदत्त इति स्थितम्।

कुसुमाञ्जलिकारिकाव्याख्याकारो हरिदासभट्टाचार्य्यो रघुनाथशिरोमणेः पूर्ववर्त्ती प्रकाशकारात् परवर्त्तीत्यसन्देह एव। तदीयव्याख्यायां प्रकाशस्योल्लेखो हि दृश्यते। सम्भाव्यते आलोककारादपि परवर्त्ती स इति। शिरोमणिकृतदीधितेरुपरि टीकां कुर्व्वाणा मथुरानाथजगदीशगदाधरभट्टाचार्य्यास्तु शिरोमणेः परवर्त्तिनः एव। जगदीशगदाधरौ समकालवर्त्तिनौ। तदानीं जगदीशः प्राचीनः गदाधरस्तु नवीनः। तयोरपि पूर्व्ववर्त्ती मथुरानाथः। दीधितेष्टीकाकारो भवानन्दस्तु मथुरानाथात् पूर्व्ववर्त्तीति सम्भाव्यते। कुसुमाञ्जलिकारिकाव्याख्याकर्त्ता रामभद्रस्तु जगदीशस्यान्तेवासी। रघुनाथशिरोमणिः प्रसिद्धस्मार्त्तरघुनन्दनस्य पूर्व्ववङ्गवास्तव्य आसीत्। गदाधरोऽप्युत्तरवङ्गवास्तव्यः। पश्चान्नवद्वीपे अधीत्य तत्रैव निवासं चक्रुः। तदेवं नवद्वीपे ये प्रसिद्धा ग्रन्थकारा आसन्, ते प्रायो वङ्गदेशीया एवेति ज्ञायते।

अथेदानीं इहोल्लिखितानां प्रसिद्धानां नैयायिकानां पौर्व्वापर्य्यक्रमेण नामान्युपन्यस्यन्ते।

| | |
|---|---|
| गौतमः | न्यायसूत्रकारः। |
| वात्स्यायनः | भाष्यकारः। |
| उद्योतकरः | वार्त्तिककारः। |
| वाचस्पतिमिश्रः | न्यायवार्त्तिकतात्पर्य्यटीकाकारः। |
| उदयनाचार्य्यः | न्यायवार्त्तिकतात्पर्य्यपरिशुद्ध्यादिकारः। |
| श्रीधराचार्य्यः | न्यायकन्दलीकारः। |

| | |
|---|---|
| श्रीहर्षः | खण्डनकारः । |
| गङ्गेश्वरः | तत्त्वचिन्तामणिकारः । |
| वर्द्धमानः | प्रकाशकारः । |
| जयदेवः ( पक्षधरमिश्रः ) | आलोककारः । |
| रुचिदत्तः | मकरन्दादिकारः । |
| हरिदासः | कुसुमाञ्जलिकारिकाव्याख्याकारः । |
| रघुनाथशिरोमणिः | दीधित्यादिकारः । |
| भवानन्दसिद्धान्तवागीशः | दीधितिटीकादिकारः । |
| मथुरानाथतर्कवागीशः | ,, |
| जगदीशतर्कालङ्कारः | ,, |
| रामभद्रसार्व्वभौमः | कुसुमाञ्जलिकारिकाव्याख्यादिकारः । |
| गदाधरभट्टाचार्य्यः | दीधितिटीकादिकारः । |

कलिकाता-महानगर्य्यां<br>राजकीयसंस्कृतविद्यालयः<br>शकाब्दाः १८१६ ।

श्रीचन्द्रकान्तदेवशर्म्मा ।

---

इति, श्रुतानुरोधेन तथा कल्प्यताम्। व्यापारद्वारा

---

मैवम्। चिरध्वस्तस्य व्यापारसत्त्वे कारणत्वमिति निरुपाध्यन्वयव्यतिरेकाभ्यां व्याप्त्यवधारणात्। न चाप्रयोजकत्वं, यागो यदि चिरध्वस्तत्वे सति सव्यापारो न स्यात्, स्वर्गसाधनं न स्याद्दृष्टवदिति विपक्षबाधकात्। न चात्र कारणताग्राहकाभाव उपाधिः, तेनापि समं व्याप्त्यवधारणेन तस्याप्यापादनात्।

तथापि देवताप्रीतिर्यागव्यापारोऽस्तु। न च तत्र मानाभावः, यजिधातोः पूजार्थतया तस्याराध्यप्रीतिहेतुक्रियात्वात्। तथाच यागस्य देवताप्रीतिसाधनत्वेन कालान्तरभावि स्वर्गं प्रति तद्द्वारा साधनतोपपत्स्यते। प्रीतेः क्षणिकत्वेऽपि तदनुभवजनितसंस्कारद्वारा तत्सम्भवात्।

अत्राहुः। देवतोद्देशेन द्रव्यत्यागेन देवताप्रीतिर्जन्यत इत्यत्र मानाभावः। यज देवपूजायामिति शाब्दिकस्मृतिः, स्मृतित्वादेव न स्वतः प्रमाणम्। तन्मूलञ्च मानान्तरं नास्त्येव। न वा स्वर्गस्य प्रीतदेवतासाध्यत्वे मानम्। वस्तुतो लाघवात् कर्तृगतफलावसानिकव्यापारस्य कल्पनाच्च देवताप्रीतिर्व्यापारः। न च स्वर्गभागिदेहान्तरमेव तद्व्यापारः, प्रलये विच्छेदेऽपि तद्व्यापारानुवृत्तेः। शरीरस्य च कार्य्यद्रव्यतया अभावात्। नापि ध्वंसएव तद्व्यापारः, तस्यानन्त्येऽपि स्वभावात् सावधिफलजनकत्वमिति वाच्यम्। प्रतियोगिध्वंसयोरेकत्राजनकत्वादिति संक्षेपः।

प्रकृते। व्यापारेति। न च प्रकृते तथेति शेषः। कारणस्या-

कथञ्चित् स्यात्। न तु भिन्नकालयोर्व्यापारव्यापारि-भावः। कारणत्वञ्च व्यापारेण युज्यते। अव्यवधानेन पूर्व्वकालनियमश्च तत्त्वम्। अन्यथाऽतिप्रसङ्गादिति चेत्। न। पूर्व्वभावनियममाचस्य कारणत्वात्। कार्य्यानुगुणावान्तरकार्य्यस्यैव व्यापारत्वात्। कृषिचिकित्सादौ बहुलं तथा व्यवहारात्। लाक्षणिकोऽसाविति चेत्। न। मुख्यार्थत्वे विरोधाभावात्।

अस्तु तर्हि पुत्रेण हते ब्रह्मणि चिरध्वस्तस्य पितुस्तमवान्तरव्यापारीकृत्य कर्तृत्वम्। तथाच लोकयाचाविप्लव इति चेत्। न। सत्यपि सुते कदाचित्तदकरणात् तस्मिन्नसत्यपि कदाचित् करणादनिर्व्वाहकतया तस्य

---

वान्तरव्यापारयोगः, यागस्य न स्वर्गकारणं, कार्य्याव्यवहितप्राक्-कालसत्त्वस्य कारणत्वादित्यर्थः। अचाव्यवहितत्वमतन्त्रं, गौरवात्। अतएव न सहभावेन कारणत्वम्। न च विनश्यद्वस्त्रसमवायिनः कारणत्वापत्तिः, तावता समवायिकारणस्यैव तथात्वादिति परिहरति। पूर्व्वभावेति। कार्य्येति। यज्जन्यं सज्जन्यजनकं, सएव तस्य व्यापार इत्यर्थः। कृषीति। यथा माघमासीयभूकर्षणस्य पाकज-परम्पराव्यापारद्वारा हेमन्तभाविशस्यजनकत्वम्। यथा वा दग्ध-मूलीकषायपानस्य धातुसाम्यद्वारा भाविज्वरशान्तिजनकत्वमित्यर्थः। व्यवहितस्य कारणत्वेऽतिप्रसङ्गमाह। अस्त्विति। येन विना यत्का-रणत्वं न निर्व्वहति तस्य स व्यापारः, न च पितुः कारणत्वं पुत्रं

व्यापारत्वायोगात्। यं जनयित्वैव हि यं प्रति यस्य पूर्व्वभावनिर्व्वाहः, सएव तं प्रति तस्य व्यापारोनापरः। यथाऽनुभवस्य स्मरणं प्रति संस्कारः। तस्य ह्यन्वयव्यतिरेकानुविधाने सिद्धे तदन्यथाऽनुपपत्त्या संस्कारः कल्प्यते, न त्वन्यथा। तथेहापि। न चेदेवं, तदापि ब्रह्मभिद्दुरशरविमोक्षसमसमयहतस्य हन्तृत्वं न स्यात्। स्याच्च स्वनिवेशनशयानस्य तत्पितुरिति। एतेनोभयं वेति निरस्तम्।

अस्तु तर्हि क्रियाधर्म्मएव कार्य्यत्वं विधिः। सर्व्वोहि कर्त्तव्यमेतदिति प्रत्येति। ततः कुर्य्यामिति सङ्कल्प्य प्रवर्त्तते इति चेत्। न। कर्त्तव्यं मयेति कृत्यध्यवसायार्थोवा स्यात्, कर्त्तव्यं मयेत्युचितार्थोवा स्यात्? तत्र प्रथमः सङ्कल्पान्न भिद्यते। व्यवहितकार्य्यसङ्कल्पोहि कर्त्तव्यो मयेति, सन्निहितकार्य्यसङ्कल्पस्तु कुर्य्यामिति। स च न

---

विना न निर्व्वहतीति न स व्यापार इत्याह। सत्यपीति। तदेव स्पष्टयति। यं जनयित्वेवेति। यदि च कार्य्यसमानकालस्यैव कारणत्वं, तदा तदाप्यनिष्टमित्याह। न चेदेवमिति। उभयं वेति। कार्य्यत्वमपूर्व्वत्वञ्च लिङः प्रवृत्तिनिमित्तमित्यर्थः। कृत्यध्यवसायः, कृत्यनुकूलेच्छा। उचितार्थोऽर्हार्थः। तत्रैव कृत्यविधानादिति भावः। व्यवहितेति। प्रवृत्त्यपेक्षयेति शेषः। स चेति, उभयरूपोऽपि सङ्कल्पः।

लिङर्थः। सत्तामात्रेण प्रवर्त्तनादित्युक्तम्। तदेतत् कर्त्तव्यतायां जातायां प्रवर्त्तते इति वस्तुस्थितौ भ्रान्तैर्ज्ञातायामिति गृहीतम्।

औचित्यन्तु क्रियाधर्म्मः प्रागभाववत्त्वं, तस्मिन् सति शक्यत्वं वा, तस्मिन् सति कर्त्तारं प्रत्युपकारकत्वं वा? प्रथमे कुतश्चिदपि न निवर्त्तेत। द्वितीये दुःखेऽपि तथाविधे प्रवर्त्तेत। तृतीये तु वक्ष्यते।

अस्तु तर्हि करणधर्म्मः। न। करणं हि शब्दः, तद्धर्म्मोऽभिधा वा स्यात्, तदर्थो भावनादिर्व्वा, तद्धर्म्म-इष्टसाधनता वा? न प्रथमः।

---

तस्याज्ञातस्यैव प्रवृत्तिहेतुत्वेन प्रवर्त्तकज्ञानाविषयत्वादित्यर्थः। सङ्कल्पविधिवादिनमुपहसति। तदेतदिति। शक्यत्वं, कृतिसाध्यत्वमित्यर्थः। कुतश्चिदिति। अनिष्टादपीत्यर्थः। तृतीये इति। इष्टसाधनार्थत्वनिरासेनेत्यर्थः। तद्धर्म्मोऽभिधा वेति। वाक्यार्थज्ञानानुकूला भावना-शब्दव्यापारादिपदवाच्या अभिधा शब्दधर्म्मो वा लिङर्थः। तदाहुर्भट्टपादाः।

"अभिधां भावनामाहुरन्यामेव लिङादयः।
अर्थात्मभावना चान्या सर्व्वाख्यातेषु गम्यते"—इति।

तदर्थो भावनादिर्व्वेत्यत्र (१)करणमित्यनुषञ्जनीयम्। लिङर्थो-

---

(१) करणमित्यनुरञ्जनीयमिति यदि हि धर्म्मविकल्पएवायमपि स्यात्, तदाऽस्य पृथगदोषात् न्यूनत्वापत्तिः। करणविकल्पे च शब्दः

अस्वत्वादप्रवृत्तेश्च नाभिधाऽपि गरीयसी।
बाधकस्य समानत्वात् परिशेषोऽपि दुर्लभः॥ १३॥
सङ्गतिप्रतिसन्धानाधिकायां तस्यां प्रमाणाभावात्।
अन्यसमवेतस्यापूर्ववदन्यव्यापारत्वेनाप्युपपत्तेः। विषय-

---

भावनादिः प्रयत्नादिः करणं, तद्धर्म्म इष्टसाधनता वेत्यर्थः।

पराभिमतशब्दधर्म्मस्वरूपाभिधायां मानाभावादित्याह। अस्व-त्वादिति। तत्सत्त्वेऽपि पदान्तरेण तदुपस्थितौ ततोऽपि न प्रवृत्ति-रित्याह। अप्रवृत्तेश्चेति। सर्व्वत्रान्यत्र पक्षेषु बाधकसत्त्वात् परिशेषे-णाभिधा लिङर्थ इत्यपि नास्ति, तत्रापि बाधकसत्त्वादित्याह। बाधकस्येति।

ननु शब्दस्य वाक्यार्थधीकारणत्वात् तस्य व्यापारेण भाव्यम-वश्यमित्यभिधैव तद्व्यापारः। किञ्च, पदानां प्रत्येकमर्थज्ञानाजनक-त्वादाशुविनाशितया क्रमभावितया च तन्मेलकस्याभावादर्थज्ञाना-नुपपत्त्या अभिधा कल्प्यते इत्यत आह। सङ्गतीति। सङ्गतिस्मृति-रेव पदस्यावान्तरव्यापारः, एकस्मृतिविषयानुपूर्व्वीविशेषविशिष्टपद-मालैव पदार्थस्मृतिव्यापारा वाक्यार्थधीकरणमिति न तत्र मान-मित्यर्थः।

---

प्रयत्नादिश्च करणत्वेन विकल्पितः, तद्धर्म्मश्चाभिधा इष्टसाधनता वेति विकल्पद्वयं पर्य्यवस्यति। तच्च दूषितमेव। किञ्च, धर्म्मविकल्प-पक्षे प्रयत्नादेः शब्दधर्म्मत्वाभावाद्विरोध इति भावः।

तथाऽपि च* स्वव्यापारं प्रति लिङ्गवद्धेतुभावाविरोधात्। अधिकत्वेऽपि ततोऽप्रवृत्तेः। बालानां तदभावे-

ननु सङ्गतिस्मृतिर्न शब्दव्यापारः, व्यापारिणं विहायान्यत्रात्मनि तत्समवायात्, ततो यः शब्दसम्बन्धस्तद्व्यापारः साऽभिधा स्यादित्यत आह। अन्येति। यथाऽऽत्मसमवेतमपूर्वं यागादेः करणस्य व्यापारः, तथा सङ्गतिस्मृतिरपि तादृशी शब्दव्यापार इत्यर्थः। अतएव, यद्व्यापारे कर्त्तृ तदेव करणं, यथा पाककरणानि काष्ठानि ज्वलनावान्तरव्यापारकर्त्तृणि, न च [१]स्वविषयज्ञाने शब्दः कर्त्ता किन्तु कर्मेत्यपास्तम्। कर्त्तृपदस्य मुख्यार्थतायामचेतनस्य व्यापारासम्भवात्, हेतुमात्रविवक्षायाञ्च [२]प्रकृतेऽप्यदोषादिति भावः।

[३]ननु व्यापारी व्यापारकारणं भवति, न च सङ्गतिस्मृतौ पदं कारणम्। अतः शब्दजन्याभिधा मन्तव्येत्यत आह। विषयतायामपीति। यथा लिङ्गस्य स्वविषयपरामर्शे विषयतया हेतुत्वं, तथा शब्दस्यापि सङ्गतिस्मृतावित्यर्थः। अस्मन्मते स्मृतेर्विषयाजन्यत्वेऽपि परमतेनेदमुक्तम्। अस्तु वा शब्दव्यापारोऽभिधा लिङ्वाच्या, तथापि

* विषयतायामपि,—इति प्रकाशसम्मतः पाठः।

(१) स्वविषयज्ञाने, सङ्गतिग्रहरूपशब्दव्यापारतया अभिहिते इत्यर्थः।

(२) प्रकृतेऽपीति विषयतया कथञ्चित् लिङ्गवद्धेतुत्वादिति मूलएवोक्तत्वादित्यर्थः।

(३) तदेव दर्शयितुं शङ्कते नन्विति।

ऽपि तद्भावात्। शब्दान्तरेण तत्त्वाविशाममप्यप्रवृत्तेः।

न च विलक्षणैव सा लिङ्गोविषयः। तद्वैलक्षण्यं प्रतीतिं* प्रति चेत्, अर्थविशेषोऽपि स्यात्। प्रवृत्तिमात्रं प्रति चेत्, अभिधासमवेतं तदिति कुतः? तत्सन्नि-

नाशौ प्रवृत्तिहेतुः [1]अपुरुषार्थत्वादित्याह। अधिकत्वेऽपीति। अभिधायामव्युत्पन्नानामभिधाज्ञानाभावेऽपि प्रवृत्तिसत्त्वादित्याह। बाला-नामिति। अभिधादिपदैरभिधां ज्ञातवतोऽप्यप्रवृत्तेरित्याह। शब्दा-न्तरेणेति।

अथाभिधादिपदात्तत्सामान्यज्ञानेऽपि न प्रवृत्तिः। लिङ्गभिधेय-विलक्षणाभिधाज्ञानस्य प्रवर्त्तकस्य ततोऽनुत्पादात्, अतएव नाख्या-तान्तरेण तज्ज्ञानेऽपि प्रवृत्तिः, अचाह। न चेति। प्रतिपत्तिं प्रतीति। प्रतिपत्तिविशेषकमित्यर्थः। अर्थविशेषोऽपीति। अर्थविशेषं विना बुद्धिविशेषस्यानुत्पत्तेरित्यर्थः। यदि प्रवर्त्तकज्ञानविशेषादेव सोऽर्थः प्रतीयते; तदा लोके [2]यत्प्रतीयमानं प्रवर्त्तकत्वेन ज्ञातं तत्-लिङ्गं वाच्यम्। न चाभिधायां तत्सम्भवतीति भावः।

अथाभिधाज्ञानमात्रस्याप्रवर्त्तकत्वात् प्रवृत्त्यैव तद्वैलक्षण्यमनुमेयं, तत्राह। प्रवृत्तिमात्रमिति। तदिति। अभिधायाः सन्निहितत्वा-

* प्रतिपत्तिं,—इति प्रकाशसम्मतः पाठः।

(१) अपुरुषार्थत्वादिति पुरुषार्थसुखादिप्रतिसन्धानं विना प्रवृत्त्यभावा-दिति भावः।

(२) यत्प्रतीयमानमिति इष्टसाधनत्वादिकमित्यर्थः।

धानादिति चेत्। न। अनियमात्। अन्यस्य सर्वस्य निषेधादिति चेत्। न। प्रवृत्तिहेतुत्वनिषेधस्य तत्त्व-त्वात्। तत्सन्निधिनिषेधस्य चाशक्यत्वात्। शब्दैकवे-द्यत्वे चाव्युत्पत्तेः।

प्रवृत्त्यन्यथाऽनुपपत्तिसिद्धे व्युत्पत्तिरित्यपि वार्त्तम्। न हि प्रवृत्तिहेतुः कश्चिदस्तीति प्रवर्त्तते। इष्टसाधनता तु स्यात्। सर्वो हि मया क्रियमाणमेतन्मम समीहितं साधयिष्यतीति प्रतिसन्धत्ते, तत इच्छति कुर्य्यामिति, ततः करोतीति सर्व्वानुभवसिद्धम्।

---

त्तदेलक्षणं प्रवर्त्तकमित्यर्थः। नानियमादिति। बौद्धसन्निधानं धात्वर्थे इष्टसाधनत्वे चास्तीत्यर्थः। प्रवृत्तिहेतुत्वस्य निषेधः प्रमा-णान्तरात्, विधिवादसन्निधेर्व्वा? आद्ये, प्रवृत्तिहेतुत्वेति। अन्त्ये, तत्सन्निधीति। यथाऽभिधायां विधिसन्निधिनिषेधोऽशक्यः, तथा धात्वर्थादावपीत्यर्थः।

ननु मानान्तरादभिधाज्ञानेऽपि न प्रवृत्तिः, लिङादिपदैक-वेद्याभिधाज्ञानस्य प्रवर्त्तकत्वादित्यत आह। शब्दैकेति। एवं तत्र लिङादिशक्तिग्रहएव न स्यात्, मानान्तरेण तदनुपस्थितेरित्यर्थः। न हीति। प्रवृत्त्यन्यथाऽनुपपत्त्या हि तद्धेतुः कश्चिदित्येव ज्ञानं स्यात्, न च तत्प्रवर्त्तकमित्यर्थः। द्वितीयं पक्षमाह। इष्टसाधनता त्विति। करणधर्म्मोविधिरिति शेषः। तदुपपादयति। सर्व्वोहीति। मये-

तदयं व्युत्पित्सुर्यज्ज्ञानात् प्रयत्नजननीमिच्छाम-वाप्तवान्, तज्ज्ञानमेव लिङ्गशाविणः प्रवृत्तिकारण-मनुमिनोति।

---

त्यादिनाऽसाध्ये कृत्यसाध्ये स्वकृत्यसाध्ये च प्रवृत्तिर्निवारिता।

तदयमिति। ननु कार्य्यत्वमेव विधिः। तथाहि। ज्ञानस्य कृतावुत्पाद्यायां चिकीर्षाऽतिरिक्तं न कर्त्तव्यम्। सा च कृतिसाध्यत्वप्रकारिका कृतिसाध्यविषयेच्छा। पाकं कृत्या साधयामीति तदनुभवात्। पाकं कुर्य्यामित्यस्य पाकं कृत्या साधयामीति विवरणाच्च। सा स्वकृतिसाध्यताज्ञानसाध्या। इच्छायाः स्वजनकज्ञानसमानप्रकारकत्वनियमात्। अतएव स्वकृतिसाध्ये प्रवर्त्तते, न त्विष्टसाधनेऽपि स्वकृत्यसाध्ये।

अथ कृत्या साध्येऽपि विषभक्षणादावप्रवृत्तेरिष्टसाधनत्वमादाय विधिः। न च तत्रानिष्टसाधनताज्ञानं प्रतिबन्धकम्। प्रवृत्तौ तदभावस्य हेतुत्वे गौरवापत्तेः। तद्वरं लाघवादिष्टसाधनत्वं विषयतावच्छेदकमस्तु। न च, प्रवृत्तेः पूर्व्वमनिष्टसाधनताज्ञानविरह उभयसिद्धः, इष्टसाधनताज्ञानञ्च सन्दिग्धम्, अतो युगपदुपस्थित्यभावाच्च लाघवावतार इति वाच्यम्। त्वयाऽपि प्रवृत्तेः पूर्व्वमिष्टसाधनताज्ञानविनियोगस्वीकारात्। यच्च शब्दादनुमानाद्वा तदधिगतं, तच्च तदभावाच्च। तस्माद्विषभक्षणादौ तृप्त्यादौ च प्रत्येकं व्यभिचारात् कृतिसाध्यत्वे सतीष्टसाधनत्वं विधिरिति।

न। विषभक्षणादौ स्वकृतिसाध्यत्वाभावात्। न हि कश्चिद्विष-भक्षणं चिकीर्षति ततः करोतीति दृश्यते। [१]जीवनयोनिकृति-साध्यञ्च तत्र भवत्येव। न चान्या कृतिरस्ति।

अथेष्टसाधनताभ्रमानन्तरं विषभक्षणमपि चिकिर्षाजन्यकृति-साध्यम्, अतो विशेषदर्शनेऽपि तत्र प्रवर्त्ततेति चेत्। न। द्विधा हि कृतिरनुभूयते; बलवदनिष्टजनिका यथा विषभक्षणादौ, तदजनिका च यथा पाकादौ। तदिह बलवदनिष्टाजनककृतिसाध्यत्वं विवक्षितम्। न च विषभक्षणे तदस्ति।

अतएव तत्र प्रथममिष्टसाधनतया तथाविधकृतिसाध्यत्वमविद्यमानमवगत्य प्रवर्त्तते, प्रवृत्त्यनन्तरञ्च बलवदनिष्टहेतुकृतिसाध्यत्वं विरोधि तत्रावगतमिति न प्रवर्त्तते।

तथाभूतकृतिसाध्यत्वं पूर्व्वानुभूतं स्मृत्वा प्रवर्त्ततेति चेत्। न। विशेषदर्शनेन भ्रमाहितसंस्कारोन्मूलनात्। अन्यथेष्टसाधनतास्मरणेऽप्यप्रतीकारात्। न चैवं श्रमेऽपि प्रवर्त्तेत, स्वेच्छाजन्यकृतिसाध्यस्य विवक्षितत्वात्। श्रमस्य च नियमतोऽन्येच्छाधीनकृतिसाध्यत्वं, दुःखत्वेन तत्रेच्छाविरहात्। अतएव स नान्तरीयक इत्युच्यते। न चैवमिच्छाज्ञानस्य प्रवर्त्तकत्वप्रसङ्गः, कृतौ परिचायकमात्रत्वात्।

---

(१) ननु चिकीर्षाजकृतिसाध्यत्वाभावेऽपि जीवनयोनिकृतिसाध्यत्वं स्या-दित्यत आह जीवनेति।

यद्वा, कृतौ स्वरूपसतीच्छा जनिका, [१]इच्छायान्तु तज्ज्ञानं जनकमस्तु, को विरोधः। न हि यदेकत्र स्वरूपतो हेतुस्तज्ज्ञानमन्यत्र न जनकम्। एवं चिकीर्षाहेतुतया कृतिसाध्यताज्ञाने व्यवस्थिते विषभक्षणादौ व्यावर्त्तकं कृतिवृत्ति [२]बलवदनिष्टाजनकचिकीर्षाधीनत्वमेव, न त्विष्टसाधनत्वम्। कृतिवृत्तिधर्म्मापेक्षया वहिरङ्गत्वात्। [३]जीवनयोनिकृतिजन्यप्राणादिसञ्चारनिवृत्त्यर्थमावश्यकत्वात्। [४]भोगचिकीर्षायां व्यभिचाराच्च।

---

(१) इच्छायान्त्विति चिकीर्षायामित्यर्थः। तथाचेच्छाज्ञानस्य प्रवर्त्तकत्वप्रसङ्गोवारितएव, कृतौ स्वरूपसदिच्छायाएव हेतुत्वाभ्युपगमादिति भावः। वस्तुतश्चिकीर्षाहेतुज्ञानस्यैव प्रवर्त्तकत्वमितीच्छाज्ञानस्य चिकीर्षाहेतुत्वे प्रवर्त्तकत्वापत्तिरिति प्रथमकल्पएव साधुरिति।

(२) यद्यपि बलवदनिष्टाजनकत्वं कृतौ विशेषणीकृतं प्राक्, तथापि चिकीर्षाविशेषणत्वेऽपि न दोषइत्याशयवानाह बलवदनिष्टाजनकचिकीर्षाधीनत्वमिति। वस्तुतो बलवदनिष्टाजनकत्वे सति चिकीर्षाधीनत्वमित्यर्थः। तथाच न पूर्व्वविरोधः, क्वचित्तु बलवदनिष्टाजनकचिकीर्षाजन्ययत्नचिकीर्षाधीनत्वमिति पाठः। तत्र बलवदनिष्टाजनकचिकीर्षाजन्ययत्ने यच्चिकीर्षाधीनत्वमुक्तरूपं, तदेव विशेषणमिति योजनया तादृशार्थलाभ इत्याहुः।

(३) ननु यागस्येव कृतेरपीष्टसाधनत्वं धर्म्मइति तुल्यमेवान्तरङ्गत्वमतआह जीवनयोनिनेति। यद्यपि तद्व्यावर्त्तकं चिकीर्षाधीनत्वमात्रं न तु बलवदनिष्टाजनकत्वमपि, तथापि मधुविषसंपृक्तान्नभोजनव्यावृत्त्यर्थं तदावश्यकमिति भावः।

(४) भोगेति तस्य स्वतः पुरुषार्थत्वेनेष्टसाधनत्वाभावादित्यर्थः।

न चोपायचिकीर्षेष्टसाधनताज्ञानसाध्या उपायेच्छात्वात् तृप्तीच्छावदिति वाच्यम्। साध्यत्वसाधनत्वयोर्विरोधेनैकत्र ज्ञातुमशक्यत्वात्। असिद्धतां सिद्धताञ्चादाय तयोर्व्यवस्थितेः। न च [१]यद्वस्तुतः कृतिसाध्यं तदिष्टसाधनमिति ज्ञायते इति युक्तम्। [२]कृतिसाध्यतोत्तीर्णज्ञानात् चिकीर्षाऽनुत्पत्तेः। अपि च, साधनत्वस्य सिद्धमात्रधर्मत्वात् साधनत्वज्ञानमिच्छाविरोधि। न हि कश्चित्कृतिसिद्धमिच्छति। अतोऽसुन्दरे तृप्त्यादौ नेच्छा तत्साध्येष्टज्ञानात्।

अथ तादृशकृतिसाध्यत्वे कृतिर्न विशेषणम्, असत्त्वात्। सत्त्वे वा, कृतौ सत्यां कृतिसाध्यताज्ञानं, तथा ज्ञाने च कृतिरित्यन्योन्याश्रयः। नोपलक्षणम्, अनतिप्रसक्तोपलक्ष्याभावादिति चेत्। न। ज्ञाने विषयतया कृतेर्विशेषणत्वात्। साध्ये च प्रवृत्तिविषये परिचायकतयोपलक्षणत्वात्। अन्यथेष्टसाधनतापक्षेऽपीष्टस्य तथाविधविकल्पग्रासात्।

ननु तादृशकृतिसाध्यत्वं कृतेः प्राक्कथमवगन्तव्यम्? न प्रत्यक्षात्। कृतिसाध्यत्वज्ञानाच्चिकीर्षा ततः कृतिः कृतौ सत्यां प्रत्यक्षेण कृतिसाध्यताज्ञानमित्यन्योन्याश्रयात्। कृतिसाध्यतोत्तीर्णे चिकिर्षाकृत्योरसम्भवाच्च। नानुमानात्। कृतक्रियमाणयोः पक्षत्वे कृतिसाध्यतोत्तीर्णत्वेन बाधात्, भाविपक्षत्वे चाश्रयासिद्धेः।

---

(१) वस्तुत इति यदा कदापीत्यर्थः।

(२) कृतिसाध्यतोत्तीर्णेति सिद्धत्वज्ञानादित्यर्थः। अन्यथा साधनत्वस्यैवायक्षादिति भावः। शेषं शब्दप्रकाशे प्रपञ्चितमनुसन्धेयम्।

उच्यते । पाकोमत्कृतिविशेषसाध्यः मत्कृतिं विनाऽसत्त्वे सति मदिष्टसाधनत्वात् मद्भोजनवत् । यस्य यदिष्टसाधनं यदा यत्कृतिं विना न सिध्यति, तत् तदा तत्कृतिविशेषसाध्यमिति व्याप्तेः । अप्रसिद्ध-स्येष्टसाधनत्वाभावात् ।

न च पक्षानुपपत्तिः, पाके कृतिसाध्यत्वं हि सिध्यत् सिद्धे बाधा-दनागतं पाकमादाय सिध्यति, पक्षतावच्छेदकधर्म्मसामानाधिकरण्यं साध्यमानस्य हेतुना सिध्यतीत्यनुमाने क्लृप्तत्वात् । यथा प्रसिद्धवह्नि-बाधेऽपि वह्निमात्रं न बाधितमित्यप्रसिद्धोऽपि वह्निः सिध्यति, तथा प्रसिद्धपाके कृतिसाध्यत्वबाधेऽपि पाकमात्रे न बाधितमित्यप्रसिद्धं पाकमादाय सिध्यति । अप्रसिद्धयोः पक्षसाध्ययोः सिद्धावविशेषात् ।

तथापि प्राथमिकत्वादावश्यकत्वाच्च लिङ्गज्ञानमेव प्रवर्त्तकमस्तु । न च लाघवात् कृतिसाध्यत्वं तथा, तदा कृतिसाध्यत्वानुमितौ मानाभावेन युगदुपस्थित्यभावादिति चेत् । न । लिङ्गज्ञाने कृति-साध्यत्वाप्रकाशे तत्प्रकारकचिकीर्षायां तस्याहेतुत्वात् ।

ननु कृतिसाध्यत्वस्य विधित्वे न कलञ्जं भक्षयेदित्यत्र विध्यर्थ-निषेधानुपपत्तिः । कलञ्जभक्षणं न कृतिसाध्यमित्यस्यायोग्यत्वात् । न । तत्रापूर्व्वस्य लिङर्थत्वेन कलञ्जभक्षणप्रवृत्तं प्रति कलञ्जभक्षणा-भावविषयकापूर्व्वस्य कृतिसाध्यत्वेन बोधनात् । न चानादित्वेन प्राग-भावो न साध्यः, भक्षणप्रवृत्तस्य हि भक्षणप्रागभावस्तत्कृतिं विनोत्तर-काले न भवति तत्कृत्या तु भवतीत्यन्वयव्यतिरेकाभ्यां तत्कृतिसाध्य-एवानुभूयते । न हि कृत्यनन्तरक्षणे घटस्वरूपं कृत्यधीनमित्यतो-ऽन्यत् कृतिसाध्यत्वं घटे । इयांस्तु विशेषः । क्वचित् कृत्यधीनः प्राक्काल-

योगः क्वचिदुत्तरकालयोग इत्युभयोरपि योगक्षेमयोः कृतिसाध्यत्वमानुभविकम्। (१)अतएवेदं मत्तोभूतमिति व्यवहारः।

ननु कृतौ नष्टायां सत्रपि धर्म्मो न कार्य्यः, तथा सति कथमपूर्व्वं कार्य्यं कामिनोऽन्वयः? आशुविनाशितया क्रियातुल्यत्वात्। मैवम्। यद्वृत्ति काम्यसाधनत्वं तत्र कार्य्यताबुद्धिः प्रयोजिका, न तु कार्य्यताविशिष्टस्य काम्यसाधनताविशिष्टतेति व्याप्तिः। तस्मात् कृतिसाध्यत्वमेव विधिः।

अत्रोच्यते। कृतिसाध्यताज्ञानस्य प्रवर्त्तकत्वे तृप्तोऽपि भोजने प्रवर्त्तेत। तथा विशेषदर्शनेऽपि चैत्यवन्दनादौ।

अथ स्वविशेषणवत्ताप्रतिसन्धानजन्यं कार्य्यताज्ञानं प्रवर्त्तकम्। तथाहि। काम्ये पुरुषविशेषणं कामना, ततः काम्यसाधने यागपाकादौ कार्य्यताज्ञानम्। नित्ये च कालशौचादि स्वविशेषणम्। तृप्तस्य तृप्तौ कामनाविरहेणेष्टसाधनताज्ञानाभावात् न तथा बोधः। विशेषदर्शने च भ्रमदशायामिव चैत्यवन्दने नेष्टसाधनताज्ञानं, येन तज्जन्यकार्य्यताबोधात् प्रवर्त्तेत।

मैवम्। कृतिसाध्यत्वज्ञाने लाघवादिष्टसाधनत्वस्यैवावच्छेदकत्वात्। न तु स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वं तत्र विशेषणं, गौरवात्। न च साध्यत्वसाधनत्वयोर्विरोधः, निर्विशेषितयोस्तयोरविरोधात्। तदा साध्यत्वसाधनत्वयोरेव विरोधात्। तथात्वस्य चानभ्युपगमात्। अन्यथा साध्यत्वसाधनत्वयोरन्यतरमेव स्यात् पाके,

(१) अतएवेदं मत्तोऽभूतमित्यत्राकारप्रश्लेषः, अभवनस्य प्रागभावरूपत्वादित्यर्थः। अतएव क्वचित् मत्तो न भूतमित्येव पाठः।

धिषुधनिवर्त्यत्वात् । तस्मात्तद्धेतोरसिद्धत्वज्ञानस्य विघटनद्वारा इच्छान्त-रोत्पत्तिप्रतिबन्धकत्वेन तथात्वं वाच्यम् । ततः प्रकृते सिद्ध्युत्पादमात्रेणैव सिद्धौ सत्यां तदसिद्धत्वभ्रमसंशयाभावात् । घनादिस्थले च तत्सम्भवेन अग्निपर्य्यन्तानुसरणमिति ।

इच्छेति । न चैवं निरन्तरानुमितित्वेनेच्छायां निरन्तरानुमित्यापत्तिः, इष्टत्वात् । न चानुमित्यानन्त्यं, तृतीयक्षणे परामर्शस्यैव विनाशात् । न च लिङ्गोपधानमतेऽनुमित्यात्मकपरामर्शमादाय तदापत्तिः, सिषाधयिषानाशादेव तथात्वात् । यत्तु विषयान्तरसञ्चारसामग्रीबलवत्त्वान्न तथाऽनुमिति-रिति । तच्चिन्त्यम् । भिन्ने विषये प्रत्यक्षसामग्रीतोऽनुमितिसामग्र्याबलव-त्त्वात् । अतएव परामर्शानन्तरं न परामर्शान्तरं तदनुव्यवसायो वा । अन्यथा सिद्धसाधनस्थले तत्सामग्र्याएव प्रतिबन्धकत्वसम्भवे सिद्धेरप्रति-बन्धकत्वे तदभावरूपपक्षताया हेतुत्वएव मानाभावात् ।

अतएवेति । दूषणत्वप्रयोजकसिषाधयिषाविघटनस्याबाद्ध्वंदिकत्वादे-वेत्यर्थः । द्वितीये हेतुमाह । असिद्धीति । वस्तुतोज्ञायमानप्रतिबन्धकता-भावादेव न हेत्वाभासत्वम् । साध्यञ्च न यथा हेत्वाभासस्तथोक्तमनुमान-प्रकाशे । विशेषणेति । लिङ्गदर्शनादिना तन्नाशात् न विशेषणत्वं, सिद्ध-साधनस्थलेऽप्यतिप्रसङ्गान्नोपलक्षणत्वमित्यर्थः । सिषाधयिषेति । साधक-प्रमाणपदं सिद्धिपरम् । तेन घनगर्जितस्थले परामर्शात्मकसाधकप्रमाण-मादाय नाव्याप्तिः । सिद्ध्युपहितप्रमाणपरं तदित्यन्ये । सिषाधयिषायाश्च विशेषणत्वमेव, तदुत्तरक्षणजायमानपरामर्शादनुमितौ विनश्यदवस्थसिषा-धयिषायास्तथात्वात् ।

ननु सिषाधयिषा तत्पुरुषीयतया तत्कालीनतया तत्साध्यीयत्वादिना-वश्यं विशेषणीया, अन्यथा व्यधिकरणामन्यकालीनामन्यसाध्यलिङ्गकी-याञ्च सिषाधयिषामादाय पक्षतासत्त्वे सिद्धसाधनेऽप्यनुमित्यापत्तिः । एवञ्च तादृशसिषाधयिषाया घनगर्जितस्थलादावप्रसिद्धेः कथं तद्घटिता तत्र पक्ष-तेति चेत् ।

नैवम् । व्यभिचारचाया अन्यकालीनायाश्च तस्यास्तदा तत्सत्त्वे विरह एवेति तामादायातिप्रसङ्गाभावात्तल्लिङ्गकतत्साध्यकतत्पक्षकानुमितिगोचरेच्छाया एव विवक्षितत्वात् । तादृश्याश्च घनगर्जितस्थलेऽपीश्वरेच्छाया एव प्रसिद्धत्वात् । तादृशानुमित्यसम्भवे पक्षत्वाभावेऽपि न क्षतिः । न चैवं बाधादेरनुमितिप्रतिबन्धकत्वं न स्यात्, तत्र तादृशानुमित्यसम्भवे पक्षताविरहादेव तदनुत्पत्तेरिति वाच्यम् । बाधाद्यनवतारदशायामन्यदा तादृशानुमितिसम्भवे तद्घटितपक्षतासत्त्वे तदा बाधादेरेव प्रतिबन्धकत्वात् ।

ननु तत्कालिकत्वेनाप्यनुमितिरवश्यं विशेषणीया । अन्यथाऽन्यकालिकानुमितिगोचरेच्छामादायातिप्रसङ्गादिति चेत् । अस्त्वेवं, तथापि पक्षताविरहेऽपि बाधादेरेव तत्रोपजीव्यत्वात् । अन्यथाऽनुमितिसत्त्वे तद्घटितपक्षताया अप्यावश्यकत्वात् । पक्षताविरहादेवानुमित्यभावेऽन्योन्याश्रयात् । एतेन सिषाधयिषा न सिद्धित्वप्रकारिकेच्छा प्रकृते तदभावात्, नापि सिद्धिविषयेच्छामात्रं प्रत्यक्षेण जानीयामितीच्छायामपि तदापत्तेः, नाप्यनुमितित्वप्रकारिकेच्छा एकलिङ्गावगते लिङ्गान्तरेणानुमित्सायां तदनापत्तेरित्याद्यपास्तम् । निरुक्तानुमितिगोचरेच्छाया एव विवक्षितत्वात् । अधिकमनुमानप्रकाशे विपञ्चितम् ।

सत्यसति वेति । समीचीनेऽसमीचीने वेत्यर्थः । सतीति शेषः । तथाच भ्रमप्रमासाधारणसिद्धिमात्रस्य प्रतिबन्धकतया तस्मिन् सति यत्र सिषाधयिषा अभावस्तत्र नास्तीति भावः । यत्तु सत्यपदं स्वरूपार्थकमिति स्वरूपसतीत्यर्थः—इति । तन्न, वाशब्दस्यासङ्गतत्वापत्तेः ।

तस्येति । यद्यपि न्यायो न लिङ्गपरामर्शात्मा किन्तु पञ्चावयववाक्यं, तथापि तत्रापि तद्धेतुत्वे मानाभावात् परामर्शपरत्वाभिप्रायेण दूषितमिति मन्तव्यम् । तदिति । तत्सहकारित्वासम्भवादित्यर्थः । तस्यैवासत्त्वेनेति भावः । अत एवेति । व्यभिचारादेवेत्यर्थः ।

परामर्शादिना तन्नाशादित्यत्र प्रकृते । अथेति । उक्तबाधकादेव संशयस्याप्च न विशेषणत्वं किन्तूपलक्षणत्वमिति दोषे सत्येवाह । मिषितेति ।

ननु प्रत्येकाभावद्वयं योग्यता तच्च प्रत्येकसत्त्वे नास्तीत्यत आह । प्रत्येकमिति । प्रत्येकाभावद्वयमित्यर्थः । साधकमानाभावमात्रस्य तथात्वे बाधबादिति भावः । अन्यथा पक्षताविरहादेवानुमितिप्रतिबन्धे बाधो हेत्वाभासो न स्यादित्यपि बोद्धव्यम् । केवलेति । साध्याभावसाधकस्य बाधकत्वमित्यभिप्रायेणेदम् । यद्यपि पक्षनिष्ठात्यन्ताभावप्रतियोगित्वग्राहकमानाविषयत्वं बाधकाभाव इति विवक्षिते तत्र नाप्रसिद्धिः, तथापि लाघव एव तात्पर्य्यम् । एतदेवाभिसन्धायोक्तमन्यथेति ।

संशयवज्जिज्ञासाऽपि न तावत्कारणस्थायिनीति मतान्तरमाह । यद्वेति । तथा च निवर्त्त्यत्वेन संशयस्य न्यायाङ्गत्वमिति भावः । य इति । तथाच प्रबोधनार्थं संशयबीजविप्रतिपत्तिप्रदर्शनम् । न तु तद्विना मननासम्भव एवेति तात्पर्य्यम् । प्रयोजकत्वमिति । शब्दात्मकविप्रतिपत्तौ विषयस्य हेतुत्वाभावादिति भावः । यस्याश्च विवक्षा, तामवान्तरविप्रतिपत्तिमाह । साक्षादिति । अलौकिकपरमाण्वादावतिप्रसक्तिर्व्यतिरेके च बाध इत्यत उक्तं, साक्षात्कारकारणेति । संयोगाद्यन्यतमप्रत्यासत्तिजन्यसाक्षात्कारकारणेत्यर्थः । न च तन्मते व्यावर्त्त्याप्रसिद्धिः । पक्षे उपरञ्जकस्यापि दानात् । अतएव साक्षात्कारत्वपर्य्यन्तमपि तज्जातित्वे वैयर्थ्यमपि नेति ध्येयम् ।

न च गर्भवर्त्तिनष्टे व्यभिचारादिदमुक्तमिति वाच्यम् । तन्मते प्रमाविषयत्वस्याप्यभावात् । भावे वाऽवश्यमिन्द्रियसन्निकृष्टत्वं, प्रमाणान्तरात्तदसम्भवात् । योग्यतापरत्वे वा सन्निकर्षत्वेऽपि तथेति भावः । विधिनिषेधकोटिप्रसिद्धिरभिधेयत्वघटत्वयोः सुलभेति । ननु घटसाक्षात्कारकारणघटचक्षुःसंयोगरूपसन्निकर्षाश्रयत्वं चक्षुष्यपि न च तल्लौकिकत्वमित्यत आह । इन्द्रियस्येति । यद्यपि संयोगस्य द्विष्ठत्वादिदमयुक्तं, तथापि नेन्द्रियविशिष्टसन्निकर्षाश्रयत्वमिन्द्रियस्यांशत आत्माश्रयात्, किन्तु तदुपलक्षितसन्निकर्षाश्रयत्वम् । तदिदमुक्तं, किन्तु प्रतियोगित्वमिति । तत्र तत्प्रतियोगिकसन्निकर्षाश्रयत्वेऽपि तस्योपलक्षणत्वमित्यर्थः । यत्र वेति । एतच्च यथाश्रुते, स्वसाक्षात्कारविवक्षायान्तु तावन्मात्रविषयत्वमेवास्तु कृतं स्वप-

दकारणादिगर्भत्वेनेति तथैव सिद्धान्तमाह । किन्त्विति । न च तन्मते साक्षात्कारस्यैव प्रमात्वेन व्याप्यव्यापकाभेदात् कथं व्याप्यव्यापकतामह इति वाच्यम् । उपाधिभेदेन भेदात् । तादृशानुमितिविषयत्वं सर्वेषामिति सिद्धिसाधनं, व्यतिरेके च बाध इत्यत उक्तं, साक्षात्कारेति । ईश्वरसाक्षात्कारमादाय दोषतादवस्थ्यादाह, चरमजन्यपदम् । अलौकिकप्रत्यासत्तित्रयजन्यसाक्षात्कारमादाय दोषतादवस्थ्यादाह, पूर्वप्रतीकम् । तत्राजन्यपदमीश्वरज्ञानजन्यतया जगतोऽप्रसिद्धिवारणार्थम् । स्वविषयकपदव्यावृत्तिस्तु मूलएव । स्वपदेन च यत्र यः साक्षात्कारत्वेनाभिमतः, सएव तत्र ग्राह्यः । सविकल्पकपदस्य यद्यपि प्रकृतेऽकिञ्चित्करं ज्ञानपदेनैव सङ्गतेः, तथापि उपरञ्जकस्यापि दानादखण्डाभावस्य च न व्यर्थत्वम् ।

केचित्तु लौकिकसाक्षात्कारविषयत्वस्य प्रकृतेऽभिमतत्वेन विशिष्टोपादानम् । अन्यथा विशिष्टप्रत्यक्षस्य स्वविषयकनिर्विकल्पकजन्यस्य तत्रासंग्रहापत्तेः । न चैवमपि विशिष्टवैशिष्ट्यप्रत्यक्षाव्याप्तिः जन्यस्वविषयसविकल्पकत्वेन जनकत्वाभावस्य विवक्षितत्वादत्र जन्यादिपदमप्रसिद्धिवारकमित्याहुः । तच्चिन्त्यम् । अत्र यद्यपीत्यग्रिमग्रन्थविरोधात् । तथा सति सविकल्पकविषयतयाऽपि सामञ्जस्ये तदनुत्थानप्रसङ्गः । यद्यपि तन्मते योगजादीनामप्रसिद्धतया तदजन्यत्वस्यापि तथात्वात्तदुपरक्तबुद्धेरप्यभावादुपरञ्जकत्वेनापि तदुपादानमसङ्गतं, तथापि असत्ख्यातिरूपा तदुपरक्तबुद्धिरस्त्येव इति नोक्तदोष इत्येके । संयोगाद्यन्यतमप्रत्यासत्तिजन्यसाक्षात्कारविषयत्वमनेनोपलक्षितमित्यन्ये।

विकल्प इति । धारावाहिक इत्यर्थः । प्राथमिकसविकल्पकस्याजनकत्वात् निर्विकल्पक इत्युपलक्षणं, प्राथमिकसविकल्पक इत्यपि द्रष्टव्यम् । प्रयत्नेति । यत्नकारणात्मविशेषगुणाविच्छाद्वेषौ तयोर्निरुपाधिविषयौ सुखदुःखे तत्कारणत्वविशिष्टात्मविशेषगुणत्वं लौकिकमानसप्रत्यक्षाविषये वर्त्तते न वेत्यर्थः । न च मानसेति व्यर्थं, मानसप्रत्यक्षपदेन मनःप्रयोज्यजातिविशेषाश्रयस्योक्तत्वात् तस्य व्यर्थत्वाभावादखण्डाभावे वा न वैयर्थ्यम् ।

लौकिकपदस्याप्रसिद्धिवारणार्थम्। अत्र प्रयत्नकारणं गुण ईश्वरज्ञानादिभि-न्निरुपधिविषयोविशिष्टप्रत्यक्षं तत्कारणात्मविशेषगुणत्वं तादृशनिर्विकल्पके वर्त्तत एव इति सिद्धसाधनमत आह, प्रथमात्मविशेषपदम्। आत्मविशेषस्य संसार्य्यात्मनोगुण इत्यर्थः। ज्ञानमादाय पूर्व्वोक्तसिद्धसाधनतादवस्थ्यमाह । प्रयत्नकारणेति। प्रयत्नसाक्षात्कारणेत्यर्थः । तेन न दोषतादवस्थ्यम् ।

ननु साक्षाज्जनकत्वं यदि व्यक्तेस्तदा इच्छाद्वेषयोरप्युपायेच्छाद्वेषद्वारा जनकत्वमित्यसम्भवः। तज्जातीयस्य चेत्तदा ज्ञानेऽप्यतिप्रसङ्गः उपादान-प्रत्यक्षस्य साक्षात्प्रयत्नहेतुत्वादिति चेत्। न। फलेच्छायाः स्वरूपसत्याः साक्षादेव प्रयत्नहेतुत्वेन व्यक्तिपक्षस्यैव क्षोदक्षमत्वात्। विजातीयव्यापा-रकजनकजातीयस्यैव वा साक्षाज्जनकत्वेन विवक्षितत्वादित्याहुः।

तच्चिन्त्यम्। फलेच्छायाः प्रयत्नजनकत्वाभ्युपगमेऽपि साक्षाज्जनकत्वे मानाभावात्। चिकीर्षादिसत्त्वे तां विना तदुत्पत्तौ विलम्बाभावात्। चिकीर्षोपादानप्रत्यक्षाभ्यां सह युगपदनवस्थानाच्च। क्षणद्वयमात्रस्थायि-त्वात्। चिकीर्षाद्वारेणैव उपपत्तौ समूहालम्बनकल्पने प्रमाणाभावाच्च। भावे वा तद्विषयत्वे न प्रयत्नजनकत्वं गौरवान्मानाभावाच्च। अन्यथा उपा-दानप्रत्यक्षेऽपि उपनीतविशिष्टप्रत्यक्षविषयत्वसम्भवान्निर्विकल्पकमादाय दोषापत्तेः। फलेच्छां विनोपायचिकीर्षाविरहात्तद्धेतुत्वस्यावश्यकत्वात्।

वस्तुतस्तु न तस्याः प्रयत्नं प्रति जनकत्वं किन्त्ववच्छेदकत्वमित्युक्तमस्मा-भिरन्यथाख्यातिवादे। विजातीयेत्याद्यप्ययुक्तम्। साक्षाज्जनकत्वेनैव विजा-तीयव्यापारकं यदुपादानप्रत्यक्षं तज्जातीयं ज्ञानमादायोक्तसिद्धसाधन-तादवस्थ्यात्। न च विजातीयव्यापारजनकजातीयभिन्नत्वं विवक्षितं ज्ञाने च विजातीयेच्छाव्यापारकत्वमेव इति वाच्यम्। ज्ञानादीनामदृष्टद्वारा कार्य्यमात्रहेतुत्वाभ्युपगमेनेच्छाया विजातीयव्यापारकप्रयत्नजनकजातीयत्वात्। किञ्च द्वेषस्य प्रयत्नकारणत्वे मानाभावः। यथा चैतत्तथा प्रपञ्चितमनुमानप्र-काशे। मूले त्वग्रेतनं प्राचीनमतमनुपादेयम्। चिन्तामणिस्वरसोऽप्येवमेव।

यच्चोक्तं निरुपधिपदं सोपाधीच्छाविषयकामिनीविशिष्टज्ञानकारणात्म-

विशेषगुणत्वयोर्न्न सत्त्वेन सिद्धसाधनवारकमेव, अग्निमात्मविशेषगुण-पदयोः कामिनीरूपात्ममनोयोगादिव्यक्तित्वेन सिद्धसाधनवारणे तात्पर्य्य-मिति । तदपि चिन्त्यम् । निदिध्यासनजन्यभावनातत्त्वसाक्षात्कारद्वारा इच्छा नियमविधिविषयदुःखाभावरूपमोक्षहेतुरिति तामादाय सिद्धसाधन-तादवस्थ्यात् । न च निदिध्यासनजन्यमदृष्टमेव, दृष्टेनैवोपपत्तेः । न च तज्जन्यत्वे स्मृतित्वापत्तिः, स्वसमानविषयकसंस्कारत्वेनैव हेतुत्वे तथात्वात् । अत्र चात्मविषयकभावनात्वेनैव हेतुत्वात् । तत्त्वसाक्षात्कारस्य विश्वविषय-कत्वाच्च । अन्यथा संस्कारध्वंसे का गतिः । अतएव मूले वक्ष्यति अती-न्द्रियार्थदर्शनाभ्युपायो भावनेत्यभ्युपगमेऽपि नासौ सत्यमेव साक्षात्कार-मुत्पादयतीति अदृष्टवत् तस्यापि प्रत्यासत्तित्वे विरोधाभावः ।

अस्तु वा तथा । तथापि देवप्रतिमादिदर्शनत्वेनैव स्वर्गहेतुत्वश्रुतेस्तन्निर्वि-कल्पकस्यापि तथात्वाविशेषात्तमादाय सिद्धसाधनम् । सुखदुःखकारणा-त्मविशेषगुणत्वमीश्वरज्ञानादावपि इति तदादाय सिद्धसाधनम् । न ह्यग्निमात्मपदमपि संसारिपरतया व्याख्यातं, तत्परत्वेऽपि पूर्व्वदोषानु-द्धारात् । जीवनयोनियत्नमादाय सिद्धसाधनतादवस्थ्याच्च । न च तस्य न सुखदुःखजनकत्वं किन्तु जनकजनकतेति वाच्यम् । अन्वयव्यतिरेकाभ्यां तद्धेतुत्वात् । अन्यथा प्राणादेरपि तथात्वे तद्धेतुत्वं न स्यात् । एतेन प्रयत्ने-त्यादिना विषयान्तेन सुखदुःखयोरेव विवक्षितत्वात् सुखदुःखान्यतरकार-णात्मविशेषगुणत्वे तात्पर्य्यमित्यपास्तम् ।

अत्र ब्रूमः । सुखदुःखान्यतरकारणात्मविशेषगुणत्वं लौकिकमानसप्रत्य-क्षविषयजातीयभिन्ने वर्त्तते न वेति विवक्षितम् । साजात्यञ्च गुणत्वसाक्षा-द्व्याप्यजात्या । धर्माधर्मोभयसाधारण्यार्थमुभयगर्भत्वम् । यथाश्रुतेऽपि सुख-दुःखयोरननुगमे तदेव बीजम् । प्रत्येकगर्भतया प्रत्येकं विप्रतिपत्तिद्वयमेव वा विवक्षितम् । एवञ्चेश्वरज्ञानादिकं निर्विकल्पकं जीवनयोनियत्नञ्चा-दाय सिद्धसाधनानवकाशः । सर्व्वेषां तज्जातीयत्वात् । धर्माधर्म्मौ तु न तथा । न चैवं विशेषपदवैयर्थ्यं, संयोगमात्रस्यैव तादृशप्रत्यक्षाविषयतया-

ऽऽत्ममनोयोगमादाय सिद्धसाधनापत्तेः । कामिनीरूपवृत्तित्वेन सिद्ध-साधनवारणायात्मपदम् । भावनावृत्तित्वेन तद्वारणाय कारणान्तम् । यदि च निदिध्यासनजन्यभावना कायव्यूहादिद्वारा सुखादिकारणं, तदा तद-न्यत्वमपि सुखदुःखविशेषणम् । न च लौकिकत्वं योगजधर्माद्यजन्यत्वगर्भं, तच्च तन्मतेऽप्रसिद्धं, साध्ये उपरञ्जकस्याप्यदानाद्यर्थत्वञ्चेति वाच्यम् । संयो-गाद्यन्यतमप्रत्यासत्तिजन्यत्वस्य विवक्षितत्वात् । अखण्डाभावे साध्ये चावै-यर्थ्यादिति ।

वस्तुतः पूर्व्वापरितोषादाह । यद्देति । प्रत्यक्षाविषयत्वमप्रसिद्धमिति लौकिकत्वं विशेषणम् । परमते चोपरञ्जकमेतद्बोध्यम् । सुखत्वादिकमादाय सिद्धसाधनवारणायाविषयान्तम् । गुणत्वादिना सिद्धसाधनवारणायात्म-पदम् । गुणपदं स्पष्टार्थम् । साक्षात्पदस्यावर्त्तमाह । भावनात्वन्त्विति । नन्विदं बाधितं, धर्मत्वाधर्मत्वयोः परस्पराव्याप्यत्वाददृष्टत्वस्य च जाति-त्वाभावादित्यत आह । अदृष्टत्वञ्चेति । यतएवादृष्टत्वं न जातिरतएव तद्व्याप्यजात्यव्याप्यतया धर्माधर्मत्वे साक्षाद्व्याप्ये इति भावः ।

समानेति । अत्र विधिकोटिर्नैयायिकानां, नेति बौद्धानाम् । यद्यपि तादृशजातिर्दुःखावच्छेदकत्वासमानाधिकरणत्वेनैतावतैव दुःखानवच्छेदक-शरीरसिद्धाविष्टसिद्धिस्तथापि चैत्रत्वादेस्तादृशजातेः पक्षीकरणे बाधात् अन्यस्याश्चाप्रतिद्धेरिति पक्षविकल्पभिया तादृशजातित्वं पक्षीकृतम् । दुःखावच्छेदकत्वासमानाधिकरणवृत्तित्वं दुःखावच्छेदकत्वानधिकरणाधि-करणवृत्तित्वं विवक्षितम् । एवञ्च सत्तावृत्तित्वेन सिद्धसाधनवारणार्थमाह । अवृत्त्यन्तम् । अनेकावृत्तिजातित्वमप्रसिद्धं इति समानकालीनपदम् । तदर्थश्च समानकालोत्पत्तिकत्वम् । एवञ्चात्मत्वमनस्त्वादिवृत्तित्वेन सिद्धसा-धनवारणार्थं शरीरवृत्ति इति ।

केचित्तु कारणविशेषप्रयोज्यशब्दवृत्तिजातेस्तथात्वेन सिद्धसाधनवारणाय शरीरवृत्तिपदमित्याहुः । यद्यपि व्यातिपदं व्यर्थं । न चैहिकसुखमात्रावच्छे-दकशरीरवृत्तिधर्ममादायार्थान्तरवारणाय तदिति वाच्यम् । ऐहिकशरी-

रस्य दुःखावच्छेदकत्वनियमादाधेनासिद्धेः। अन्यथा जातिपददानेऽप्यप्रती-
कारादिति। यदि च दुःखावच्छेदकत्वं तत्स्वरूपयोग्यत्वं, तदा तुल्यम्।
एवञ्च समानकालीनपदमपि व्यर्थम्। तथापि पक्षे उपरञ्जकस्यापि दाना-
ज्जातिपदमप्रसिद्धिवारकतया तदपि सार्थकमिति। वस्तुतस्तु एतच्छरीर-
भावविघटाद्यन्यतमत्वादिकमादायार्थान्तरवारणाय जातिपदम्। तस्य दुःखा-
वच्छेदकस्वरूपयोग्यत्वानधिकरणघटाद्यधिकरणत्वादिति। विधिनिषेध-
प्रसिद्धिश्च शब्दत्वादौ चैत्रत्वादौ चेति बोध्यम्।

सुखेति। सुखदुःखोभयजनकमच्छरीरातिरिक्तत्वमुभयथा सुखदुःखो-
भयजनकत्वविशेषणाभावात् मदीयत्वविशेषणाभावाच्च। तच्चान्यनिबन्धन-
मन्यत्र प्रसिद्धं, आद्यनिबन्धनञ्च पक्षधर्मताबलात्पक्षे सिद्ध्यतीति भावः।
साधने त्विति। साधनत्वे त्वित्यर्थः। तत्रैवाग्रे विप्रतिपत्तिदर्शनात्। धर्मि-
णस्तु दरडादेः प्रागभावाविषयप्रतीतिविषयत्वात्। साधनत्वञ्च न तथा,
तस्य प्रागभावगर्भतया प्रमेयत्वादिनाऽपि ग्रहे प्रागभावविषयत्वनिय-
मादिति। प्रागभावविषयप्रतीतिविषयप्रतियोगित्वे साध्ये सिद्धसाधनं,
कार्य्यस्य घटादेः प्रागभावघटान्योन्याभावाविति समूहालम्बनविषयान्योन्या-
भावप्रतियोगित्वादिति नन्द्वयम्। प्रागभावतत्प्रतियोगित्वाभ्यां तादृश-
प्रतीतिविषयाभ्यां सिद्धसाधनवारणार्थं प्रतियोगित्वप्रागभावान्येति तादृश-
प्रतीत्यविषयविशेषणम्। प्रागभावप्रतियोगित्वप्रागभावान्येत्यर्थः।

केचित्तु सामान्यत्वेन विशेषोऽपि वारित इति यथाश्रुतेऽप्यदोष इत्याहुः।
न च कार्य्यान्योन्याभावमादाय सिद्धसाधनं तस्य कार्य्यत्वावच्छिन्नप्रतियोगि-
तया कार्य्यत्वस्य च प्रागभावप्रतियोगित्वरूपतया तादृशप्रतीत्यविषयत्वा-
दिति वाच्यम्। अनेन हि रूपेणाभावग्रहे प्रतियोगितावच्छेदकग्रहध्रौव्यं,
न त्वन्यथापीति प्रकारान्तरेण तद्ग्रहे प्रागभावाविषयप्रतीतिविषय-
त्वात्। अतएव ध्वंसस्य जन्याभावतया जन्यत्वस्य प्रागभावगर्भतया
तत्प्रतियोगित्वेन सिद्धसाधनमपास्तम्। ध्वंसस्य प्रकारान्तरेण तादृशबुद्धि-
विषयत्वात्। ध्वंसत्वस्य तादृशप्रतीत्यविषयत्वेऽपि कार्य्यस्य तदप्रतियोगि-

त्वात् । तदिदमुक्तं, प्रागभावत्वाद्यप्रतियोगीति । तथाच बाधान्न ध्वंसत्वप्रागभावत्वादिप्रतियोगित्वेनार्थान्तरमिति बाधस्योरस्याय पक्षविशेषणमिति मन्तव्यम् ।

ननु प्रागभावत्वादेरिव प्रागभावप्रतियोगित्वस्यापि न प्रतियोगि कार्य्यं, किन्त्वाश्रयः । तथाच तमादाय सिद्धसाधनानवकाशात्तदन्यत्वं विशेषणमयुक्तम् । न हि प्रतियोगित्वं सम्बन्धित्वमात्रं विवक्षितं, तथा सति परम्परासम्बन्धेन प्रागभावत्वादेरपि तथात्वात्तदन्यत्वमपि साध्यविशेषणं स्यात् । पक्षविशेषणं चासिद्धं स्यात् । तथाच स्वरूपसम्बन्धविशेषोवाच्यः । स च तत्र नास्ति । किञ्च कारणतया समं स्वरूपसम्बन्धविशेषोऽन्यः प्रागभावादिना च समं कार्य्यस्यान्यः स इति शब्दमात्रसाम्यादनुमानाप्रवृत्तिः । न च स्वरूपसम्बन्धत्वेनैवानुगमः इति वाच्यम् । तस्य परम्परासम्बन्धसाधारण्येनोक्तदोषानिवृत्तेः । न च तत्र परम्परासम्बन्धस्यैव सत्त्वात् सम्बन्धान्तरमन्तरेण इत्यादिरूपं तन्न तत्रेति वाच्यम् । तस्य संयोगसमवायौ विनेत्यर्थात् । अन्यथा परम्परासम्बन्धस्य सर्व्वत्र सत्त्वादसम्भवापत्तेरिति चेत् ।

न । साक्षात् सम्बन्धित्वस्य विवक्षितत्वात् । न च कारणतया समं कार्य्यकारणादारकएव सम्बन्धस्तथा च बाध इति वाच्यम् । घटाभाव इत्यत्रेव घटकारणतेत्यत्रापि साक्षात्स्वरूपसम्बन्धानुभवात् । एवञ्च यद्यपि कारणताभिन्नं तादृशं प्रागभावगर्भं पूर्व्ववर्त्तित्वादिकं नानाधर्ममादायार्थान्तरं सिद्धसाधनं वा भवत्येव, तथापि तत्तदन्यत्वेनापि तादृशप्रतीतिविषयो विशेषणीय इति युक्तमुत्पश्यामः ।

कार्य्यप्रतियोगित्वमिति । यद्यपि पूर्व्वेण कार्य्यस्य सप्रतियोगित्वमभिप्रेतमनेन च कारणतायास्तथापि साक्षात् सम्बन्धित्वमेव प्रतियोगित्वमभिप्रेतं तच्चोभयनिरूपितत्वमुभयत्र तुल्यमित्यविरोध इति भावः । अतएव प्रागभावादिवृत्तित्वेन नार्थान्तरशङ्का, कार्य्यसाक्षात्सम्बन्धित्वस्य तत्र बाधात् । अन्यच्च पूर्ववत् । द्वयोरपीति । ननु प्रथमविप्रतिपत्तौ प्रागभावत्वमादाय प्रसिद्धिसंभवेऽपि द्वितीयायामसम्भवः । न हि प्रागभावत्वस्य प्रागभावत्वे वृत्ति-

रपि तु प्रागभावएव, स च न प्रागभावान्य इति चेत्। प्रागभावत्वपदेन प्रागभावत्वत्वस्य विवक्षितत्वात्। तस्य च तादृशबुद्धिविषये प्रागभावत्वे वृत्तेः। तत्प्रतियोगित्वाच्चेत्येके। प्रागभावत्वपदेन प्रागभावधर्मः प्रमेयत्वादिर्विवक्षित इत्यन्ये।

यत्तु व्यासज्यप्रतियोगिकाभावाश्रयत्वे प्रतियोगित्वप्रागभावान्यः केवलः प्रागभावोऽपीति तद्वृत्तित्वेन यथाश्रुतमेव सम्यगिति। तन्तुच्छम्। प्रागभावमादाय सिद्धसाधनस्यैवमपरिहारात्। तथा च तदन्यत्वविशेषणं व्यर्थमापद्येत। वस्तुतस्तु कार्य्यपदं तद्विशेषपटादिपरम्। तथाच तत्प्रागभावतत्प्रागभावप्रतियोगित्वान्यप्रागभावाविषयप्रतीत्यविषयपटादिप्रागभाववृत्तित्वादिना प्रागभावत्वे प्रसिद्धिरिति यथाश्रुतमेव सम्यगिति।

कार्य्येति। अनन्यथासिद्धकार्य्यपूर्ववर्त्तिनीत्यर्थः। विशिष्टस्याप्रसिद्धत्वेऽपि खण्डशः प्रसिद्धेरिति भावः। एवं ब्रह्मैव कारणं एकजातीयं प्रधानं वेत्यत्र संशयमाह। यद्वेति। तज्जातीयोत्पत्तिप्राक्क्षणत्वं यत्र, तत्र ब्रह्माधिकरणत्वं प्रधानाधिकरणत्वं वेत्यत्र व्यापकीभूताधिकरणत्वेऽवच्छेदकं विशेषणीभूतं ब्रह्मैव प्रधानं वा नात्यन्ताभावप्रतियोगि व्यापकं नित्यत्वादिति निषेधकोटिः परेषां, बाधकोटिरस्माकम्, अत्यन्ताभावप्रतियोगिनोदण्डादेरपि तादृशत्वाभ्युपगमादिति बोध्यम्। यद्यपि व्यापकनित्यत्वेऽप्याकाशवदत्यन्ताभावप्रतियोगित्वं ब्रह्मादेरविरुद्धं, तथापि तद्वदवृत्तित्वानभ्युपगमात्प्रयुत सकलदेशकालवृत्तित्वादिदमध्यवसेयम्।

विशिष्टे त्विति। विप्रतिपत्तिरिति शेषः। एवं प्रागपि बोध्यम्। अविशिष्टप्रत्येकप्रसिद्धिदशायामेवैतदभिमतमिति प्रसिद्धिरिति भावः। तदिति। तत्साधनत्वेन यागादिकस्तुरभाव इत्यर्थः। प्रमाणपदं हीति। तथाचाप्रमाणत्वादिति मूलोक्तस्य बहुव्रीहितत्पुरुषाभ्यां प्रमितिशून्यत्वात् तत्करणेन्द्रियादिशून्यत्वात् तत्समवायिभिन्नत्वादित्यत्र तात्पर्य्यम्। तदिति। तस्य साधनत्वसाधनेऽपीत्यर्थः। तदिति। कारणत्वासिद्धावित्यर्थः। प्रत्यक्षेण तद्ग्रहस्य निषिद्धत्वादिति भावः।

न प्रथमः पक्ष इति । न प्रथमकल्प इति सामानाधिकरण्ये प्रथमकल्पस्य हेत्वभावरूपतया तदभावरूपस्य साध्यस्य हेतुरस्तीति पर्य्यवसाने यतो हेतुरस्तीत्यत्र साध्याविशेषेण हेतुत्वानुपपत्तिः स्यात् । यदि च न प्रथमः कल्प इत्यस्य हेत्वभावकल्पो न प्रामाणिक इत्यर्थः, तथापि यतोहेतुरस्तीति व्यधिकरणम् । तथाच हेत्वभावकल्पो न प्रामाणिकः असत्ख्यातिविषयत्वादित्यत्र नोक्तदोष इति तदर्थपरतया व्याख्यातमिति मन्तव्यम् । यद्यपि पक्षादेरप्रसिद्धौ नोक्तानुमानमपि सम्भवति, तथापि तन्मतेनैव तत्पक्षाभावसाधनमुपन्यस्तमिति मन्तव्यम् । यद्वा एतदस्वरसादेव व्याघातमालम्बते । तथाहीति ।

यत्तु यतः सापेक्षत्वादिति पञ्चमीद्वयमसंबद्धमिति कुदृष्टिव्याख्यानमिति । तन्न, यतो हेतुरस्तीति हेतुहेतुत्वेन सापेक्षत्वादित्यस्य सङ्गतत्वात् । सदृष्टान्तेनाह । तथापीति । एतावन्मात्रं प्रागभावसाधारणमतः प्रत्यक्षं विशिनष्टि । एतस्मादिति । तत्फलमाह । अतएवेति । उक्तप्रत्यक्षस्य तत्रासम्भवादेवेत्यर्थः । प्रत्यक्षपरतायां प्रागभावे कादाचित्कत्वस्य व्यभिचारेऽप्यदोषः । लिङ्गत्वेनाप्यग्रे तदभिधानात् । तदभिप्रायेणाह । प्रागिति । प्रकारान्तरेण प्रागभावव्यावृत्तं प्रत्यक्षमाह । अपि चेति । अनन्यथासिद्धनियतपूर्वसदित्यर्थः । नियमानन्यथासिद्ध्योरित्यत्र समाधिमाह । प्रत्यक्षे चेति । ननु परं प्रति प्रत्यक्षमुपन्यासानर्हमेव, अनुमानच्छाययैव तत्र तस्य गमकत्वाङ्गीकारात् । किञ्च कादाचित्कत्वमुपन्यस्तमलमकमेवैवं स्यादित्यत आह । यद्वा प्रत्यक्षेति ।

नन्वनुमानप्रामाण्ये किं सहकारितया, स्वतन्त्रस्यैव समर्थत्वात् । अप्रामाण्ये सहकारित्वमपि न स्यात्, किञ्चैवं प्रत्यक्षानुमितित्वयोः सङ्करापत्तिरित्याशयेनाह । यद्वेति । सूर्य्यस्पन्दात्मकक्षणेन समं घटादेः सम्बन्धान्तराभावादाह । स्वरूपेति । ननु यथाश्रुतं कादाचित्कत्वं प्रागभावे व्यभिचारि, प्रागसत्त्वविशेषितञ्च व्यर्थविशेष्यत्वग्रस्तमित्यरुचेराह । यद्वेति । नन्वेवमुत्पत्तिमात्रमेव हेतुरस्तु अधिकस्य व्यर्थत्वादिति चेत् । न । इष्टत्वात् ।

उत्पत्तिपदेनोत्पत्तिरूपत्वस्य विवक्षितत्वात्तथाचाद्यसमयसम्बन्धस्य हेतुत्व-पर्य्यवसानम्। यद्वा उत्पत्तिगर्भं उत्पत्तिघटकः किञ्चित्समय आद्यसमयस्तत्-सम्बन्ध इत्यर्थः। तत्रैव पर्य्यवसानं विसर्गशून्यपाठादित्याहुः।

यद्यप्यत्रापि स्वरूपस्यैव तत्सम्बन्धत्वे तत्र पूर्ववदुत्पत्तिमत्त्वेन चोत्प-त्तेरित्यग्रिमग्रन्थविरोधः, तथापि स्वरूपातिरिक्तसम्बन्धस्योत्पत्तिरूपत्वं तत्र चात्माश्रयादनवस्थानाच्च नोत्पत्तिमत्त्वमिति मताभ्युपगमानुसारेणेदम्। असाधारणं स्यादिति। अगमकं स्यादित्यर्थः। ननु तदुभयात्मकं प्रधानात्मकं वा अतीन्द्रियं नास्मदादीनां प्रत्यक्षानमिति यदि ब्रूयात्तदा दोषान्तरमाह। न वेति। अभिन्नत्वेति। हेतोरभिन्नत्वेऽभिन्नजातीयत्वे चेत्यर्थः। हेतोरिति पाठेऽप्ययमर्थः सएवेति ध्येयम्। किञ्चिदिति। अन्य-थासिद्धकिञ्चित्पदार्थावधिकोत्तरत्वव्याप्यकालसम्बन्धित्वाभाव इत्यर्थः। न वेति। परसिद्धमापादकं भवति, न च कारणत्वपर्य्यवसन्नप्रतियोगित्व-त्वन्मते प्रसिद्धिरित्यर्थः। स्वमते प्रत्यक्षेणैव तत्प्रसिद्धेस्तथात्वादिति भावः। अतएव तन्मतेनैवोत्तरमाह। तस्येति। तुशब्द इति। परस्पराकाङ्क्षि-भावस्य तुशब्दार्थत्वादिति भावः। पक्षद्वयइति। नित्यत्वाक्षीकत्वान्यतर-पक्षइत्यर्थः।

नन्वत्वन्मते नित्यत्वपक्षएव पर्य्यवस्यति न त्वनीकत्वमसत्ख्यात्यनभ्युपगमे सांव्यवहारिकस्यापि तस्य तत्रानभ्युपगमादित्यत्रपेराह। यद्वेति। एत-दुत्तरकालेति। एतत्तु पक्षविशेषणमुत्तरकालोत्पत्तिकघटांशे आपाद-कासिद्धिवारणाय। पूर्वकालीनघटेंऽशतः सिद्धसाधनवारणायायमिति। पूर्वकालवृत्तिरित्यर्थः। एतत्कालवृत्तिसर्वपक्षत्वे आपादके व्यर्थविशेष्यता स्यात्, पक्षीयव्यभिचारवारणायोगादतोविशिष्य पक्षयति। घट इति। उत्तरकालोत्पत्तिकव्यभिचारादाह, सत्यन्तम्। तद्घटसमसमयोत्पत्तिक-पटादौ व्यभिचारादाह। एतत्पूर्वकालेति। अव्यवहितपूर्वकालेत्यर्थः। तथा च चिरतरपूर्वकालोत्पन्नोदृष्टान्तः। अन्यथा यथाश्रुतस्याप्रसिद्धा तदसिद्धिरित्यवधेयम्। तेनापि तादृशकालाद्यपेक्षयादृष्टान्तासिद्धिरे-

वेत्यत आह प्रथममुत्पत्तिपदम्। चरममुत्पत्तिपदं चिन्त्यम्।

केचित्तु वृत्तिपदेन संयोगस्य, कालस्य कालावृत्तित्वात् तत्र व्यभिचारवारणाय तदुपादानम्। न चैवं प्रागुत्पन्नगुणादौ व्यभिचारः, आपादके द्रव्यत्वस्यापि विवक्षितत्वादित्याहुः। वस्तुतस्तु नञ्व्यत्यासेन एतत्पूर्वकालोत्पत्तिकसापेक्षोत्पत्तिकत्वाभावो विवक्षितः। तथाच नाव्यवहितत्वविवक्षा, न वा अखण्डाभावे वैयर्थ्यप्रसङ्ग, न वा नित्यस्य दृष्टान्तत्वे तदसिद्धिरिति। यद्ययमिति पूर्वकालोत्पत्तिके इष्टापत्तिवारणाय पक्षविशेषणम्। घटोयदीति। घटव्यवहितकालानधिकरणत्वं घटाव्यवहितकालाधिकरणत्वं पर्य्यवस्यति। यत्तु आकाशादेरपि तथात्वे तदादायापादकासिद्धिः स्यादिति घटव्यवहितकालानधिकरणत्वं यथाश्रुतमेवाभिमतमिति। तन्न, अनन्यथासिद्धत्वस्य पदार्थविशेषणस्यावश्यकत्वात्। अन्यथा दण्डत्वादिकमादाय दोषतादवस्थ्यापत्तेः। तस्मादुभयथाऽप्यदोष इति। रासभाद्युत्तरत्वसामानाधिकरण्यादिपर्य्यायानुमाने कारणत्वं न सिद्ध्येदिति व्याप्यत्वपर्य्यन्तम्। न चानन्यथासिद्धत्वेनैव तद्वारणमिति वाच्यम्। रासभादेरपि तथात्वात्। अन्यथा कारणतालक्षणे नियमांशोपादानमनर्थकं स्यात्। तत्र च तस्याविवक्षितत्वे प्रकृतेऽपि तथाऽस्त्विति। प्रतियोगी चासत्ख्यात्युपनीत इति मन्तव्यम्। घटव्यवहितकालत्वं घटानधिकरणकालावृत्तित्वमापाद्यम्। अन्येति, अन्यकालोत्पत्तिके इष्टापत्तिवारणाय पक्षविशेषणम्। उत्तरकालोत्पत्तिको दृष्टान्तः। सकलेति। एतच्च पक्षविशेषणं नित्यत्वेनेष्टापत्तिवारणाय। अलीकत्वेन तद्वारणाशयमिति। प्रामाणिक इत्यर्थः।

किञ्चित्कालावृत्तिर्न स्यादित्येव कृते व्योमादौ व्यभिचार इत्यत आह। किञ्चिदिति। प्राक्कालावृत्तित्वे सतीत्यर्थः। तेन न प्रागभावे व्यभिचारः। यद्यपि सत्यन्तमेव समर्थमिति व्यर्थविशेष्यत्वं, तथाप्यखण्डाभाव आपाद्य इति ध्येयम्। तेनेति विशिष्टाभावः, उभयथा सकलकालावृत्तितया सकलकालावृत्तितया च, तत्राद्यस्य पक्षविशेषणमहिम्नाऽभावे द्वितीयस्य पर्य्यव-

धानम्। तथानिष्टमिति सापेक्षत्वसिद्धिरिति भावः।

एतावदिति, पूर्वापरकालमात्रवृत्तिघटांशे सिद्धसाधनवारणाय पक्ष-विशेषणम्। एतावत्कालवृत्तौ पूर्वकालोत्पन्ने व्यभिचारादाह, सत्वन्तम्। एतावत्पदं कालविशेषणमात्रासिद्धिवारकम्। एतत्कालीनोत्पन्ने घटादौ सत्वन्तमात्रं व्यभिचारीत्यत आह। एतत्कालाव्यवहितेत्यादि। ननूत्तर-कालोत्पत्तिक एव दृष्टान्तः, अन्यथापादकवैकल्यात्, तत्र चैतत्पूर्वकाल-वृत्तित्वादिगादिसापेक्षत्वादापादकवैकल्यमित्यत आह। अव्यवहितेति। मध्यव्यत्यासेनैतत्कालाव्यवहितपूर्वकालावृत्तीत्यर्थः। नित्यन्तु व्यवहितेऽपि वर्त्तते इत्यदोष इति वदन्ति।

तत्तुच्छम्। उत्तरकालोत्पन्नचरमकारणमादाय दोषतादवस्थ्यापत्तेः। वयन्तु, पूर्वकालवृत्तिपदं पूर्वकालोत्पत्तिकपरमिति न नित्यमादाय दृष्टान्ता-सिद्धिः। न च तादृशादृष्टादिसापेक्षत्वाद्दोषतादवस्थ्यम्, उत्तरकालोत्पन्ना-दृष्टसापेक्षस्य दृष्टान्तत्वे तथाप्यविरोधात्। अव्यवहितपदेनैव तद्वारणाद्वा। यद्व्यवहितपूर्वकालोत्पत्तिकादृष्टेन नोत्तरकालीनकार्य्योत्पादनं, एतत्काल-पदेन तस्यैव कालस्य विवक्षितत्वात्। प्रथमकल्पेऽव्यवहितपदं स्फुटार्थमिति युक्तमुत्पश्यामः। व्याप्यत्वं पूर्वत्वञ्च विपर्य्यये नियमादिगर्भकारणत्वलाभाय। एवञ्चानन्यथासिद्धत्वमपि पदार्थे विशेषणमित्याहुः।

अतएवेति। यतएव किञ्चित्कालावृत्तित्वे सतीत्यादौ न स्यादेवेत्यस्यैव कादाचित्कत्वाभावपदेन पर्य्यवसानम्। अतएव मूले कादाचित्स्यादिति मूलोक्तकादाचित्कत्वाभावापादनं साम्प्रदायिका अन्यादृशमाहुः। अन्यथा मौनवक्तव्यापत्तेरित्यर्थः। तत्र पक्षविशेषणमहिम्नाऽलीकत्वसिद्धिरित्येव भेदोनोक्तदोषइत्यसरसोद्भावनं सम्प्रदायेनेतीति वदन्ति। केचित्तु सम्प्रदाय-विदइति प्रकरणान्वयीत्याहुः।

हेतुभवनयोरिति। यद्यपि हेतोर्यद्भवनं तस्यैव विशिष्टस्यैकस्य निषेधा-त्सङ्ख्यतइति द्विवचनमयुक्तं, तथापि विशिष्टमपि तदुभयात्मकमेवेति तयोरुक्तमिति ध्येयम्। अहेतुश्चेति। हेतुव्यतिरिक्तश्चेत्यर्थः। हेतुनिषेध

भवनमुत्पत्तिरूपमसम्भवीत्यत आह । तस्येति । अकारणकत्वेऽपीति । अकारणकत्वाविशेषेऽपीत्यर्थः । नियतेति । नियतदेशतद्वृत्तित्वमित्यर्थः । परमाणोर्देशत्वमपरस्य तद्वृत्तित्वमिति स्वभावादेव यथा यथा नियम इति भावः । नियतदेशवृत्तिनियतसम्बन्धित्वं विवक्षितमित्यन्ये । परमाणुपदं भावप्रधाननिर्देशेन परमाणुत्वपरमित्यपरे । ये ये निरवधय इति । अकादाचित्कत्वमाकाशादिषु न तत्तद्धर्माधीनमननुगमादिति निरवधित्वनिबन्धनमेव मन्तव्यमन्यस्यासम्भवादिति परस्परविरोधावधारणेन निरवधित्वे कादाचित्कत्वस्वभावविरोध इत्यर्थः । अतएवाननुगमप्रदर्शनार्थं ये ये इत्युक्तमिति वदन्ति ।

अयं च्छायाः इति । अत्र च कालत्वमापादकविशेषणम् । तेन घटरूपादौ न व्यभिचार इति ध्येयम् । अन्ये इत्यस्वरसोद्भावनम् । तद्बीजन्तु उक्ततर्कावष्टम्भे यथोक्तमेव युक्तम् । तदनवष्टम्भे त्वेतदप्यप्रयोजकमित्याहुः । न क्षीतीति । भावकादाचित्कत्वमिदमिति न प्रागभावाद्यास्विर्दोषः । नन्वेवं गौरवमित्यत आह । तथा सतीति । अन्यथा द्वयोरपि कादाचित्कत्वे घटस्य कादाचित्कत्वव्यवहार आकाशस्याकादाचित्कत्वव्यवहारश्च लोकानां विरुध्येतेत्यर्थः । तथाच गौरवमपि प्रामाणिकमिति भावः । नन्विति । घटप्रागभावनिरूपकस्य चक्षुरादेर्न घटकारणत्वं यथा इत्यर्थः । न च प्रागभाव इति । अधिकबलत्वेन प्रागभावनिरूपकत्वं कारणत्वव्याप्यमिति भावः । तस्येति । प्रतियोगिसमवायिकारणमात्रनिरूप्य इत्यस्येत्यर्थः । चक्षुरादेरिति । तथाच न तस्य प्रागभावनिरूपकत्वं, यस्य तु तन्निरूपकत्वं कपालादेस्तस्य हेतुत्वमेवेति नोक्तदोष इत्यर्थः ।

नन्विदमनुपलब्धिगम्याभाववादिमतं, अस्माकन्तु चाक्षुषएवाभाव इत्यपसिद्धान्तः । न च प्रागभावो न चाक्षुष इति न वयं ब्रूमः, किन्तु प्रागभावत्वप्रकारनिरूपणत्वावच्छिन्नं प्रत्यजनकं चक्षुर्व्यभिचारादिति, तदिह सामग्रीनिविष्टाधिकरणस्य परम्परा निरूपणकारणता प्रागभावप्रतियोगिजनकता चेति युक्तोनियम इति वाच्यम् । शब्दादिना तत्प्रकारकनिरूपणसम्भवेन

व्यभिचारादधिकरणत्वस्याप्यतथात्वात्। प्रत्यक्षनिरूपणमादाय व्यभिचारश्च तुल्यः। चक्षुष्ट्वेन व्यभिचारेऽपीन्द्रियत्वेनाव्यभिचारात् विशिष्याधिकरणेऽपि व्यभिचारात्। अस्तु वैवं, तथाप्यनन्यथासिद्धस्य प्रागभावनिरूपकस्याधिकरणग्रहादेर्यथा न घटकारणत्वं, तथाऽनादेरपि न तथात्वमिति दोषस्तदवस्थ एव। एतेन परमार्थतस्त्वेव चक्षुरनन्यथासिद्धत्वाभिधानमित्यपास्तम्। अधिकरणग्रहणमादायोक्तदोषानिवृत्तेः। किञ्च यदि चक्षुरादिव्यापाराभावेऽपि तत्प्रतीतेस्तदन्यथासिद्धं, तदाऽधिकरणग्रहणमपि तथा स्यात्। शब्दादिना तद्विनाऽपि तत्प्रतीतेः। घटोऽप्येवं चाक्षुषो न स्यात्। तद्व्यापाराभावेऽप्यनुमानादिना तत्प्रतीतेः। प्रतीतिविशेषे वा व्यभिचारतुल्यत्वमेवेति चेत्।

अत्र ब्रूमः। अधिकरणत्वेन प्रागभावनिरूपकस्य तत्प्रतियोगिजनकत्वमिति नियमः। कपालादेश्च तथात्वात्तज्जनकत्वं न चक्षुरादेरित्यत्र तात्पर्यम्। निरूपकञ्च प्रत्यक्षनिरूपक एवेत्यवधेयम्। न च तत्राप्यधिकरणस्य न निरूपकत्वं, किन्तु तद्बुद्धेरिति वाच्यम्। प्रयोजकत्वमात्रस्यैव विवक्षितत्वात्। न च प्रतियोगिसमवायिभिन्नस्य देशकालादेरपि तन्निरूपकत्वाभ्युपगमाद्व्यभिचार इति वाच्यम्। तस्यापि हेतुत्वाभ्युपगमात्। ननु देशकालयोः का गतिरिति चेत्। न। तयोरपि स्वरूपयोग्यत्वात्। वस्तुतोऽधिकरणत्वेन निरूपकजातीयं किञ्चिदवश्यं कारणमिति नियम इति केचित्। उपस्थिते प्रागभावे घटकारणत्वग्रहः, उपस्थितिश्च तस्य न कपालाद्युपस्थितिमन्तरेणेति कारणताग्राहकमानेन प्रथमोपस्थितकपालादेरेव कारणत्वं गृह्यते, न तु प्रागभावस्यापि। उत्पन्नानुत्पत्त्या तु तस्य तथात्वग्रहो न तु प्रत्यक्षात्, चक्षुरादिकञ्च न तदोपस्थितं न वा कपालादिवदनन्यथासिद्धमिति न कारणमित्यत्र तात्पर्यम्। आपादके विशेषणमित्यन्ये। न च नित्यत्वमुपाधिः, तस्याप्यापाद्यत्वादिति भावः। न च धूमत्वमिति। न च परमाण्वादौ व्यभिचारः, जन्यवृत्तित्वे सतीत्यापादकविशेषणादित्याशङ्कः। तन्न। परमाणुधूमान्यतरत्वादौ व्यभिचारात्। तस्मा-

दहनव्यभिचारिभूतजन्यवृत्तिः स्यादित्यापादकमतो नोक्तदोषः । दहना-समवहितत्वं तदसम्बद्धत्वं तदघटितत्वं वाऽभिप्रेत्याह । अपरस्येति । धूमोयदीति । धूममात्रस्य पक्षत्वे आपादकासिद्धिः, धूममात्रस्य तत्समवधानोत्तरोत्पत्तिकत्वाभावेन धूमत्वादेस्तदनवच्छेदकत्वात् । रासभोत्तरभाविधूमस्य पक्षत्वे सिद्धसाधनं तद्धूमत्वावच्छिन्नस्य तथाभावादिति चेत् । नैवम् । धूमस्य समवधानोत्तरोत्पत्तिकत्वनियमेऽपि दहनस्य तदनियतत्वं परेणाभिप्रेतमिति तद्व्यभिचारित्वमेव तदुत्तरोत्पत्तिकतावच्छेदकत्वेन पराभिप्रेतमिति धूममात्रस्य पक्षत्वेऽप्यदोषादित्याहुः ।

---

# शुद्धिपत्रम् ।

## प्रथमभागस्य ।

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ । |
|---|---|---|---|
| वान | वान् | ३ | ६ |
| निगमनम्" — इति | निगमनम् (न्या. १ । १ । ३३ — ३९)" — इति | ३ | १५ |
| घटितत्त्व | घटितत्व | ३ | २३ |
| समासात | समासात् | ६ | १३ |
| प्रयोजनम्" — इति | प्रयोजनम् (न्या. १ । १ । २४)" — इति | ६ | १९ |
| क्रियम्" | क्रियम् (मी. ४ । २ । २७ । | १२ | १७ |
| शब्दम्" | शब्दम् (वे. १ । १ । ५ । | १२ | १७ |
| मर्थान्तरम्" | मर्थान्तरम् (न्या. ५ । २ । ७)" | २२ | १३ |
| त्यथः | त्यर्थः | २५ | १२ |
| तद्ग्राहक | तद्ग्राहक | २६ | १३ |
| प्रागभावत्वस्य | प्रागभावत्वत्वस्य | ३१ | १७ |
| वत्वत्वे | वत्वे | ३१ | १८ |
| मत्वे | मत्त्वे | ३६ | १७ |
| तदनियत्वं | तदनियतत्वं | ४८ | १४ |
| द्वौरमारब्धवन्तस्तएव्र | द्वौरमारब्धवन्तस्तएव | ६१ | १५ |
| प्रतिवन्दिः | प्रतिबन्धिः | ६३ | १३ |
| उपदीयतइति | उपादीयतेइति | ६४ | ८ |

| अशुद्धम् । | | शुद्धम् । | | पृष्ठे । | पङ्क्तौ । |
|---|---|---|---|---|---|
| तद्विष्टे | ... | तद्विशिष्टे | ... | ६४ | १७ |
| परमाणा | ... | परमाणु | ... | ६५ | २१ |
| कार्य्यत्वाभिधान | ... | कार्य्यत्वाभिधानं | ... | ६७ | १६ |
| विषय | ... | विलय | ... | ७६ | ७ |
| काय | ... | कार्य्यं | ... | ७६ | ११ |
| धूत्तः | ... | धूर्त्तः | ... | ६२ | २ |
| मतमात्र | ... | तमात्र | ... | ६६ | १४ |
| प्रतिबन्ध्या | ... | प्रतिबन्ध्या | ... | १११ | १७ |
| वधारणा | ... | वधारणा | ... | ११२ | २ |
| चात्र | ... | मात्र | ... | ११३ | ३ |
| यात् | ... | अयात् | ... | ११६ | १५ |
| उभया | ... | उभय | ... | १२२ | १४ |
| भोगे | ... | भागे | ... | १२२ | १५ |
| गात्तन्नाशे | ... | गाग्रात्तन्नाशे | ... | १२६ | १२ |
| पूव्वस्य | ... | पूर्व्वस्य | ... | १२८ | १७ |
| चिकित्स | ... | चिकित्से | ... | १३४ | १ |
| वयववि | ... | वयवि | ... | १३६ | ११ |
| विद्य स्यैव | ... | विद्यमानस्यैव | ... | १४५ | ५ |
| मन्त | ... | गन्तृ | ... | १४६ | २ |
| व्यात्त्य | ... | व्यावर्त्त्य | ... | १४६ | २१ |
| सिद्धिर्व्वोध्या | ... | सिद्धिर्बाध्या | ... | १५३ | १६ |
| कारयात्व | ... | कार्य्यत्व | ... | १५७ | १४ |
| भोजनकत्वं | ... | भोगजनकत्वं | ... | १५६ | ६ |
| भोगे | ... | भोगो | ... | १६० | ० |
| संख्या | ... | सख्या | ... | १६३ | ४ |



| अशुद्धम्। | शुद्धम्। | पृष्ठे। | पङ्क्तौ। |
|---|---|---|---|
| त्तदा स्यादिति ... | तादात्म्यादिति ... | १६७ | ३ |
| हेतुः, ... | हेतुः। ... | १६८ | ६ |
| सांसादृश्य ... | सादृश्य ... | १७६ | १ |
| प्रह्यते ... | प्रह्येते ... | १७६ | १८ |
| भज्यते ... | भज्ते ... | १७९ | १३ |
| लाघवा ... | ल्लाघवा ... | १८१ | १४ |
| नचोव ... | नचोय ... | १८१ | २१ |
| वप्रिसङ्ग ... | वतिप्रसङ्ग ... | १८३ | ९ |
| सन्धेही ... | सन्देह्यो ... | १९३ | १२ |
| असाधारण ... | अथासाधारण ... | १९४ | १२ |
| अन्नय ... | नान्वय ... | १९७ | १७ |
| कारण ... | कारण ... | २०९ | ९ |
| साधनो ... | साधनी ... | २१६ | १० |
| लब्धे ... | लब्धे ... | २२८ | ५ |
| संप्रयेना ... | संप्रयेना ... | २३१ | ५ |
| मूर्त्तत्वात् ... | ऽमूर्त्तत्वात् ... | २३५ | ४ |
| साधना ... | साधन ... | २३९ | १० |
| साधनाद्यनवच्छिन्न ... | साधनाद्यवच्छिन्न ... | २३९ | १७ |
| विशेष्य ... | विशेष्यस्य ... | २४७ | १६ |
| सत् प्रति ... | सत्प्रति ... | २४५ | ३ |
| अन्यन्तर ... | अन्यतर ... | २४९ | १ |
| यथापि ... | तथापि ... | २५१ | २१ |
| स्याग्रे ... | स्याग्रे ... | २५२ | १७ |
| पयाख्यव ... | पयाव ... | २५४ | १२ |
| यदे ... | यदेक ... | २५५ | १ |

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ । |
|---|---|---|---|
| चाक्षुषा | चाक्षुष | २५५ | ४ |
| वद्विनाश इति | तद्विनाशः (न्या. ४ अ. । १ आ. २७ सू.) इति | २६३ | ४ |
| कानां नाशा | कानामनाशा | २६४ | ११ |
| स्तार | तार | २७१ | १८ |
| व्यायवः | वायवः | २७४ | ७ |
| निय म | नियम | २८३ | ४ |
| मात्रार्थो | मात्रार्थो | २९० | १४ |
| तस्यादिति | तस्मादिति | २९३ | २१ |
| प्रतीति चेत् | प्रतीतिरिति चेत् | २९५ | १ |
| ऽन्यदा | अन्यदा | ३०४ | ८ |
| प्रयोजत्वे | प्रयोजकत्वे | ३१२ | १४ |
| इदनी | इदानी | ३१६ | १२ |
| नानु | नान्ध | ३१८ | १६ |
| देश्नैव | देशनैव | ३२४ | ६ |
| त्यत । आह | त्यत आह | ३२७ | ११ |
| न चेति एकेति | न चेति । एकेति | ३३७ | १२ |
| न स्यात् | स्यात् | ३३७ | १८ |
| वत्मा | वात्मा | ३४६ | ११ |
| स्यरूपा | स्वरूपा | ३४७ | १ |
| विषयेन्द्रियाना | विषयेन्द्रिया | ३५० | १३ |
| सत्वे | सत्त्वे | ३५२ | ११ |
| निर्णीत | निर्णीत | ३५७ | ३ |
| व्यय | अप्र | ३६५ | ५ |
| पुत्रादि | पुत्रादिभि | ३७१ | १३ |

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ । |
|---|---|---|---|
| विशेषा | विशेष | ३७६ | ५ |
| आकारणा | अकारणा | ३८५ | १३ |
| दि वत् | दिवत् | ३८७ | ३ |
| धारणीम् | धारणीयम् | ४१३ | ६ |
| तयोस्तयो- | तयो- | ४१३ | ६ |
| मैत्रा | मित्रा | ४१४ | १७ |
| हेत्वाभासाः”— | हेत्वाभासाः ( न्या. १ । २ । ४५ । ”— | ४१५ | ११ |
| पद | पदं | ४१७ | २० |
| त्ययः | त्यर्थः | ४५८ | १६ |
| गतारि | गतादि | ४८१ | ८ |
| तद्दृष्ट | तददृष्ट | ४८८ | १४ |
| म्यस्येति | अनियम्यस्येति | ४८९ | ६ |
| रेव। नेति | रेव नेति | ४९१ | ६ |
| स्योक्तत्वात् | स्योक्तत्वात् | ४९८ | १ |
| दृष्टमिति | दृष्टम् । ( न्या. १ । १ । ५ ) ” इति | ५०१ | १८ |
| जन्यति | जन्येति | ५०३ | १७ |
| दूपा | द्रूपा | ५१० | १७ |
| दूप | द्रूप | ५१२ | ६ |
| ग्रहो | ग्रहौ | ५१३ | ५ |
| समाहार | समाहारा | ५२६ | १७ |

---

# शुद्धिपत्रम्।

द्वितीयभागस्य।

| अशुद्धम्। | | शुद्धम्। | | पृष्ठे। | पङ्क्तौ। |
|---|---|---|---|---|---|
| ज्ञानापेच्चं | ... | ज्ञानानपेच्चं | ... | ३ | २ |
| विशिष्य | ... | विशेष्य | ... | ६ | १ |
| ग्राहीत्वे | ... | ग्राहित्वे | ... | १५ | ६ |
| तद्दशेषयो | ... | तद्विशेषयो | ... | २४ | ३ |
| युक्तं | ... | युक्तं | ... | २८ | ११ |
| प्रवृत्ते | ... | प्रवृत्ति | ... | ४१ | १५ |
| ज्ञान | ... | "ज्ञान | ... | ४२ | १ |
| दध्यात्ममिति | ... | दध्यात्मम् (न्या. ५। १। ३१)"—इति | ... | ४२ | २ |
| मानम, | ... | मानम्, | ... | ४३ | ३ |
| यद्येवमाप्त | ... | यद्येवम् "आप्त | ... | ४४ | ३ |
| प्रामाण्यादिति | ... | प्रामाण्यात् (न्या. २। २। ६७)"—इति | ... | ४४ | ७ |
| इत्यथः | ... | इत्यर्थः | ... | ५५ | ३ |
| कत्तृ | ... | कर्त्तृ | ... | ५८ | ५ |
| त्यक्तम् | ... | त्युक्तम् | ... | ६० | ७ |
| व्याभि | ... | व्यभि | ... | ६२ | १३ |
| न च शरीरस्य | ... | न चाशरीरस्य | ... | ७० | ७ |
| कत्तृ | ... | कर्त्तृ | ... | ७४ | ३ |
| तयैव | ... | तथैव | ... | ७४ | ४ |
| काय्य | ... | कार्य्य | ... | ९२ | १९ |

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ । |
|---|---|---|---|
| भिक्ष | भिक्षु | ९८ | १ |
| सव्वज्ञ | सर्व्वज्ञ | १०४ | ८ |
| वक्ता | वक्तृ | १०४ | १८ |
| विजृम्भितम् | विजृम्भितम् | १०८ | २२ |
| हेत्वष्टम्भात् | हेत्ववष्टम्भात् | ११३ | १२ |
| वदार्थं | वेदार्थं | १२८ | १ |
| हृत | हृतः | १३० | ७ |
| स्वग | स्वर्गं | १३२ | १ |
| न्यश्वर्य्यं | नैश्वर्य्यं | १३३ | १३ |
| समञ्जम्, | समञ्जसम् | १४० | १ |
| श्रोत्रियश्छन्दो | श्रोत्रियंश्छन्दो | १४४ | १० |
| ल्लोकवदिति | ल्लोकवत् ( मी. १२ । २ । २३ । | १५६ | ६ |
| संख्याऽपि | संख्या | १५७ | ७ |
| मुख्यत्वे | मुख्यं वे | १५७ | ८,१६ |
| वैशेष्य | विशेष्य | १५८ | २० |
| व्यापापा | व्यापारा | १६० | १६ |
| कारखा | कारका | १६१ | ११ |
| पेक्षणी- | पेक्षणी | १६४ | ४ |
| भावेन | भावना | १६४ | ५ |
| प्रवृत्त्या | प्रवृत्त्यो | १६९ | १७ |
| परस्परया | परम्परया | १७१ | १८ |
| भत | तत | १८७ | १८ |
| पित्त | पक्ति | २०३ | ११ |
| पराङ्गत्वन | पराङ्गत्वेन | २१८ | १६ |

| अशुद्धम् । | | शुद्धम् । | | पृष्ठे । | पङ्क्तौ । |
|---|---|---|---|---|---|
| पाशङ्का | ... | पाभशङ्का | ... | २२० | १३ |
| कुर्य्यात् | ... | कुर्य्या | ... | २२१ | ७ |
| मथनी | ... | मथ्नी | ... | २२२ | २ |
| कपदादीनि | ... | कठपदादीनि | ... | २३४ | ११ |
| वाच्य | ... | वाक्य | ... | २३४ | ११ |
| वक्त | ... | वक्तृ | ... | २३४ | १८ |
| अनुग्रिष्यत | ... | अनुग्रिष्यते | ... | २३८ | १३ |

# कुसुमाञ्जलिमकरन्दस्यावशिष्टांशस्य शुद्धिपत्रम् ।

| अशुद्धम् । | | शुद्धम् | | पृष्ठे । | पङ्क्तौ |
|---|---|---|---|---|---|
| भावात् | ... | भावात् | ... | २ | ५ |
| तद्दारा | ... | तद्द्वारा | ... | ३ | १९ |
| शुर | ... | शूर | ... | ५ | ६ |
| सिद्धि | ... | सिद्ध | ... | ११ | ४ |
| सिद्धि | ... | सिद्ध | ... | १२ | ३ |
| सम्बन्धत्व | ... | सम्बन्धत्वे | ... | १६ | ११ |

# कुसुमाञ्जलिप्रकरणोल्लिखितग्रन्थनाम्नामकारादि-क्रमेण सूची।



## प्रथमभागस्य।



1

द्वितीयभागस्य ।

आ ।



इ ।



उ ।



क ।



ज ।



प ।



म ।



य ।



र ।



### व ।



### श ।



### स ।





# कुसुमाञ्जलिप्रकरणोल्लिखितग्रन्थकर्त्रादिनाम्ना-मकारादिक्रमेण सूची ।

## प्रथमभागस्य ।

।८

न।

नास्तिक ३७३ । १० ॥

नैयायिक १६ । ३ ॥

प।

पातञ्जल १४ । २ ॥

पौराणिक १६ । १ ॥

प्राभाकर ४६४ । १ ॥

ब।

बौद्ध ३२१ । ३ ॥

भ।

भास्कर ३३२ । ५ ॥

म।

मनु ३१७ । २ ॥

मनोवैभववादी ३४६ । १ ॥

महापाशुपत १५ । १ ॥

मीमांसक १६ । ३ ॥ १५७ । ७, ८ ॥ ३७३ । ११ ॥

य।

याज्ञिक १६ । १ ॥

व।

वैशेषिक ४४८ । ३ ॥

वैष्णव १५ । २ ॥

व्यास ३२९ । ३ ॥

श।

शैव १५ । २ ॥

---

द्वितीयभागस्य ।



---



# कुसुमाञ्जलिप्रकरणधृतश्लोकानामकारादिक्रमेण प्रतीकसूची ।



## प्रथमभागस्य ।

अन्ये परप्रयुक्तानां ४१३ । १ ॥
उभयोरन्तरं ज्ञात्वा ३३१ । ८ ॥
जनानुरागप्रभवाहि सम्पदः ८९ । ७ ॥
यावच्चाव्यतिरेकित्वं ३९५ । १ ॥

---

## द्वितीयभागस्य ।

गच्छ गच्छसि चेत् कान्त १२३ । ८ ॥
स्वव्यापारे च कर्त्तृत्वं १४७ । ३ ॥

---

# कुसुमाञ्जलिप्रकाशोल्लिखितग्रन्थनाम्नामकारादि-क्रमेण सूची।



प्रथमभागस्य।

श ।



स ।



---

द्वितीयभागस्य ।

आ ।



ज ।



द ।



न ।

व ।

वेद १ । ३ ॥ ४९ । ८ ॥ १०४ । ४ ॥ १०५ । २, ३, ४ ॥ १०६ । २, ३, ४ ॥ १०७ । २, ३, ४, ५, ८ ॥ १०८ । ५ ॥ १०९ । १, ८ ॥ ११० । १, ५ ॥ १२० । ३, ४, ५, ६, ८ ॥ १२४ । ९, ११ ॥ १२५ । २ ॥ १२६ । ३, ५ ॥ १२८ । ३, ९, १० ॥ १२९ । ६, ७ ॥ १३० । १, २, ४ ॥ १३१ । ४, ९, ११ ॥ १३४ । ७, ८ ॥ १७८ । १३ ॥ १७९ । ४ ॥ १८३ । ५ ॥ १८४ । २, ७, १३, १५ ॥ १८६ । ७ ॥ २२३ । १३ ॥ २२४ । ४ ॥ २२७ । ८ ॥ २३० । १५ ॥ २३१ । १ ॥

श ।

श्रुति २२४ । ९ ॥

स ।

सूत्र ४६ । ३ ॥ १९१ । १२ ॥
स्मृति १०६ । ६ ॥ १०७ । ४, ९ ॥ १०८ । ५, ७ ॥ १४४ । १० ॥ १९३ । १२ ॥

---

# कुसुमाञ्जलिप्रकाशोल्लिखितग्रन्थकर्त्रादिनाम्ना- मकारादिक्रमेण सूची ।



प्रथमभागस्य ।

अ ।



आ ।



क ।



ग ।



च ।



ज ।



न ।

प।



ब।



भ।



म।



र।



व।



श।



स।



---

द्वितीयभागस्य ।



---

# मकरन्दोल्लिखितग्रन्थनाम्नामकारादिक्रमेण सूची।

प्रथमभागस्य।

अ।



ग।



च।



द।



प।



ब।



ल।

व ।

वेद २०५ । ८ ॥ ३२२ । ३ ॥ ४८८ । १ ॥

श ।

शब्दखण्ड ३०८ । ५ ॥

शब्दप्रकाश २६६ । ११ ॥ ३७३ । ५ ॥ २८० । ६ ॥ २८६ । ६ ॥
२९५ । १ ॥ ३११ । ६ ॥ ३१९ । १ ॥ ४४८ । ३ ॥ ४६३ । ५ ॥

---

द्वितीयभागस्य ।

अ ।

अनुमानप्रकाश ५३ । १८ ॥ ५६ । १ ॥ ६३ । ६ ॥

आ ।

आगम १०५ । २ ॥ १११ । २ ॥

प ।

परिमल २ । १० ॥ १४१ । ५ ॥

प्रकाश २११ । ५ ॥

प्रत्यक्षप्रकाश ६ । ३ ॥

व ।

वेद १ । ३, ४ ॥ १०५ । ५, १२, १३, १४ ॥ १०६ । ६ ॥ १०८ । २ ॥
१२६ । १ ॥ १२८ । १ ॥ १३० । १ ॥ १३१ । ४ ॥

श ।

शब्दप्रकाश १०७ । १ ॥ १५२ । ३ ॥ १७९ । ६ ॥ २०४ । ३ ॥ २२१ ।
२ ॥ २२३ । १ ॥ २२६ । २ ॥

स ।

स्मृति १०७ । २ ॥

---

## अवशिष्टांशस्य ।

### अ ।



### च ।



### प ।



### व ।



### श ।



### स ।

# मकरन्दोल्लिखितग्रन्थकर्त्रादिनाम्नामकारादि-क्रमेण सूची ।

## प्रथमभागस्य ।

---

द्वितीयभागस्य ।



---

अवशिष्टांशस्य ।



---

# न्यायकुसुमाञ्जलिप्रकरणस्याकारादिक्रमेण विषयसूची ।

## प्रथमभागस्य ।

क ।



ज ।



त ।



द ।



न ।



प ।

स ।

व ।



स ।



---

# कुसुमाञ्जलिप्रकाशस्याकारादिक्रमेण विषयसूची ।

## प्रथमभागस्य ।

अ ।



आ ।



उ ।



क ।

---

## द्वितीयभागस्य ।



---

१॥

# मकरन्दस्याकारादिक्रमेण विषयसूची।

## प्रथमभागस्य।



## द्वितीयभागस्य।

# कुसुमाञ्जलिप्रकरणीयकारिकाणामकारादिक्रमेण प्रतीकसूची ।

## प्रथमभागस्य ।

### अ ।



### आ ।



### इ ।



### ए ।



### क ।



### च ।



### ज ।

## द ।

व ।



श ।



स ।



ह ।

## द्वितीयभागस्य ।

न ।

[illegible] (Text) Part I, Fasc. 1, Part II, Fasc. 1–5 @ /6/ e[illegible]

[illegible] (English) Part II, Fasc. 1 ...

Prákrita Lakshaṇam, (Text) Fasc. 1 ... ...

Parásara Smṛiti, (Text) Vol. I, Fasc. 1–8; Vol. II, Fasc. 1–6; V[illegible] III, Fasc. 1–4 @ /6/ each ... ... ...

Paráśara, Institutes of (English) ... ... ...

S'rauta Sútra of Ápastamba, (Text) Fasc. 1–12 @ /6/ each

* Ditto Látyáyana, (Text) Fasc. 2–9 @ /6/ each ...

Ditto S'ánkháyana, (Text) Vol. I, Fasc. 1–7; Vol. II, [illegible] 1–4 Vol. III, Fasc. 1–3 @ /6/ each ...

*Sáma Veda Saṃhitá, (Text) Vols. I, Fasc. 5–10; II, 1–6; III, [illegible] IV, 1–6; V, 1–8, @ /6/ each Fasc. ... ...

Sankhya Sutra Vritti, (Text) Fasc. 1–4 @ /6/ each ...

Ditto (English) Fasc. 1–3 ... ...

*Sankara Vijaya, (Text) Fasc. 2 and 3 @ /6/ each ...

*Sánkhya Pravachana Bháshya, Fasc. 3 (English preface only)

S'ri Bháshyam, (Text) Fasc. 1–3 @ /6/ each ... ...

Suśruta Saṃhitá, (Eng.) Fasc. 1 & 2 @ /12/ each ...

*Taittiríya Áraṇya, (Text) Fasc. 2–11 @ /6/ each ...

* Ditto Saṃhita, (Text) Fasc. 9–37 @ /6/ each ...

Táṇḍya Brahmaṇa, (Text) Fasc. 1–19 @ /6/ each ...

Tattva Chintámaṇi, (Text) Vol. I, Fasc. 1–9, Vol. II, Fasc. [illegible] Vol. III, Fasc. 1–2, Vol. IV, Fasc. I @ /6/ each ...

Tul'si Sat'saí, (Text) Fasc. 1–4 @ /6/ each ... ...

Uvasagadasáo, (Sanskrit and English) Fasc. 1–6 @ /12/ ...

Varáha Purána, (Text) Fasc. 1–14 @ /6/ each ... ...

*Váyu Puráṇa, (Text) Vol. I, Fasc. 2–6; Vol. II, Fasc. 1–7, [illegible] each Fasc. ... ... ... ... ...

Vishṇu Smṛiti, (Text) Fasc. 1–2 @ /6/ each ... ...

Vivádaratnákara, (Text) Fasc. 1–7 @ /6/ each ... ... 2 10

Vrihannáradiya Purána, (Text) Fasc. 1–6 @ /6/ ... 2 4

Vrihat Soayambhu Puran, Fasc. I–III ... ... 2

## *Tibetan Series.*

Pag-Sam Ṭhi S'iṅ, Fasc. 1–4 @ 1/ each ... ...

Sher-Phyin, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–3 @ 1/ each

Rtogs *brjod dpag hkhri* S'iṅ (Tib. & Sans.) Vol. I, Fasc. 1–4; [illegible] Fasc. 1–2 @ 1/ each ... ... ... ...

## *Arabic and Persian Series.*

'Álamgírnámah, with Index, (Text) Fasc. 1–13 @ /6/ each...

Áin-i-Akbari, (Text) Fasc. 1–22 @ 1/ each ...

Ditto (English) Vol. I, Fasc. 1–7, Vol. II, Fasc. 1–5, V[illegible] Fasc. 1–5, @ 1/12/ each ... ... ...

Akbarnámah, with Index, (Text) Fasc. 1–37 @ 1/ each ...

Arabic Bibliography, by Dr. A. Sprenger ... ...

Bádshánámah with Index, (Text) Fasc. 1–19 @ /6/ each ...

Catalogue of the Persian Books and Manuscripts in the Library [illegible] Asiatic Society of Bengal. Fasc. 1 & 2 @ 1 each ...

Dictionary of Arabic Technical Terms, and Appendix, Fasc. [illegible] 1/ each ... ... ... ... ... 21

Farhang-i-Rashídí, (Text) Fasc. 1–14 @ 1/ each ...

Fihrish-i-Ṭúsí, or, Ṭúsy's list of Shy'ah Books, (Text) Fasc. 1–4 [illegible] each ... ... ... ... ...

Futúḥ-ul-Shám Waqidí, (Text) Fasc. 1–9 @ /6/ each ...

Ditto Ázádí, (Text) Fasc. 1–4 @ /6/ each ...

Haft Ásmán, History of the Persian Mansawi, (Text) Fasc. I

History of the Caliphs, (English) Fasc. 1–6 @ /12/ each ...

Iqbálnámah-i-Jahángírí, (Text) Fasc. 1–3 @ /6/ each ...

Iṣabáh, with Supplement, (Text) 51 Fasc. @ /12/ each

Maásir-ul-Umara, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–9; Vol. III [illegible] Index to Vol. I Fasc. X & XI @ /6/ each ...

Magházi of Wáqidi, (Text) Fasc. 1–5 @ /6/ each ...

Muntakhab-ul-Tawárikh, (Text) Fasc. 1–15 @ /6/ each ...

* The other Fasciculi of these works are out of stock, and complete [illegible] supplied.

Táríkh-i-Fíráz Sháhi of Zia-al-din Barni (Text) Fasc. 1-7 @ /6/ each ...
Táríkh-i-Baihaqí, (Text) Fasc. 1-9 @ /6/ each ... ... ... 3
Táríkh-i-Fírozsháhi, of Shams-i-Siráj Aif, (Text) Fasc. 1-6 @ /6/ each... 2
Ten Ancient Arabic Poems, Fasc. 1 & 2 @ 1/8/ each ... 3
Wís o Rámín, (Text) Fasc. 1-5 @ /6/ each ... ... 1
Zafarnámah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 @ /6/ each ... 6
Tuzuk-i-Jahángirí, (Eng.) Fasc. 1 ... ... ... ... 0

## ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES. Vol. VII, Vols. XIII and XVII, and Vols. XIX and XX @ 10/ each ... ... Rs. 50
   Ditto Index to Vols. I—XVIII ... ... 5
2. PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ per No.; and from 1870 to date @ /8/ per No.
3. JOURNAL of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1850 (7), 1851 (7), 1857 (6), 1858 (5), 1861 (4), 1862 (5), 1864 (5), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), @ 1/8 per No. to Subscribers and @ 2/ per No. to Non-Subscribers.

*N. B.—The figures enclosed in brackets give the number of Nos. in each Volume.*

4. Centenary Review of the Researches of the Society from 1784—1883 .. 3
   General Cunningham's Archæological Survey Report for 1863-64 (Extra No., J. A. S. B., 1864) ... ... ... ... ... 2
   Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., J. A. S. B., 1868) ... ... ... ... 2
   Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., J. A. S. B., 1875) ... ... ... ... 4
   Introduction to the Maithili Language of North Bihár, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., J. A. S. B., 1882) ... ... ... ... ... ... 4
5. Anis-ul-Musharrahin ... ... ... ... ... 3
6. Catalogue of Fossil Vertebrata ... ... ... ... 3
7. Catalogue of the Library of the Asiatic Society, Bengal ... ... 3
8. Iṣṭiláhat-uṣ-Súfíyah, edited by Dr. A. Sprenger, 8vo. ... ... ... 1
9. Ináyah, a Commentary on the Hidayah, Vols. II and IV, @ 16/ each... 32
10. Jawámi-ul-'ilm ir-riyáẓí, 168 pages with 17 plates, 4to. Part I .. 2
11. Khizanat-ul-'ilm ... ... ... ... ... 4
12. Mahábhárata, Vols. III and IV, @ 20/ each ... ... ... 40
13. Modern Vernacular Literature of Hindustani by G. A. Grierson. (Extra No., J. A. S. B., 1888) . ... ... ... ... 4
14. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I—III, with 8 coloured Plates, 4to. @ 6/ each ... ... 18
15. Sharaya-ool-Islám ... ...

